# BHAKTI ŚATAKA

## भक्तिशतकम्॥

BY

RĀMA CHANDRABHĀRATI.

WITH A COMMENTARY

BY THE

REVD. C. A. SEELAKKHANDHA THERA

OF

"SAILABIMBĀRĀMA" VIHĀRA,
DODAUDUWA, CEYLON.

*PUBLISHED BY THE BUDDHIST TEXT SOCIETY OF INDIA UNDER THE ORDERS OF THE GOVERNMENT OF BENGAL.*



DARJEELING:
PRINTED AT THE BENGAL SECRETARIAT PRESS.
1896.

# भक्तिशतकम् ॥

# (BHAKTI-SHATAKAM.)

——o⊂⊃o——

श्री बौद्धागमचक्रवर्त्तिना

**श्रीरामचन्द्रभारतिना भूसुरेणाऽऽचार्य्येण**

विरचितम् ॥

——o⊂⊃o——

लङ्कायाम्

शैलबिम्बारामे निवासिना

**आचार्य्य श्रीशीलस्कन्ध स्थविरेण**

विरचितया टीकयासमलङ्कृतम् ॥

PUBLISHED BY

THE BUDDHIST TEXT SOCIETY OF INDIA,

[*UNDER THE ORDERS OF THE GOVERNMENT OF BENGAL.*]




Darjeeling:

PRINTED AT THE BENGAL SECRETARIAT PRESS,

1896.

# INTRODUCTION.

THE "Bhakti Sataka" (Sanskrit—*Bhakti*, faith; *Sataka*, composition of a hundred), compiled by the Brahman Pandit Sri Rama Chandrabharati, derives its name from the fact that it consists of one hundred verses, illustrative of the virtues of Buddha, composed in order to shew the great faith the author had in Him. This Pandit, Rama Chandrabharati, was born in the village of Veravati in the district of Varendra belonging to the province of Radha of the principality of Gauda in India; he belonged to the family of Katyayana, and was renowned as one well-versed in logic, grammar, rhetoric, and various other sciences and Hindu mythology.

He came to Cotta (Jayawardanapura) in Ceylon during the reign of King Parakramabahu, and during the poetical and literary career of Sri Rahula Sangha Raja, famous both in Ceylon and other countries. There is reason to believe that, at the time of his arrival in Ceylon, Sri Rahula was living at Cotta, although Wijayabahu Pirivena of Tottagamuwa was his permanent residence. He was known by several names, such as "Principal of Wijayabahu Pirivena (College)," "Chief of Tottagamu Vihara," "Vachissara (a title given by Parakramabahu at his installation as the chief of all the monks in the Island)," and "Sri Rahula, as he was called, by his tutor."

It seems that the said Pandit Rama Chandrabharati made his acquaintance with Sri Rahula at Cotta. Several learned men came to Ceylon from time to time, where they received great honours from the Sinhalese kings. Although it is not exactly known in what year the said Pandit arrived in Ceylon, it appears from his book

"Wartharatnakara Panchika" that it was compiled in Ceylon in the year 1999A.B. or 1245A.D.

Having made his acquaintance with Sri Rahula, he became his pupil, and learnt from him the Three Pitakas embodying the doctrines of Buddhism; and when he discovered that, according to his religion, he could not attain Nirvana, he gave it up and embraced Buddhism, following the Three Guides (viz., Buddha, the Doctrine, and the Priesthood). Subsequent to his conversion, he wrote this book, which is well-known for its elegance and good style. It contains 107 stanzas composed in twelve different metres. The usefulness of this book to beginners in acquiring a good style generally, and in learning Buddhism in particular, is very great. The author says that, he who avails himself of the advantages of this book obtains Triple Happiness (*Triwarga Sampat*, viz., Dharma, Artha, and Moksha).

It is said that, King Parakramabahu was so much pleased with this book that he presented the author with a [illegible] bearing the inscription "Buddhagama Chakravarti" (*i.e.*, chief minister of Buddhism), and made him his Spiritual Prime Minister. He had since written two valuable books—one of which was called the "Warthamalakhyawa" (a work for facilitating the study of difficult metres and having for its subject an account of the celebrated monk, Maha Netra Prasada), and the other "Wartharatnakara Panchika" (a commentary on "Wartharatnakara" by Pandit Sri Kedara Bhatta). One of the stanzas of the latter, written in honour of his teacher and to exemplify the metre "Stree" of 11th chandas, runs as follows:—

"राहुलनामा मुनिरति विद्वान्
षड्गुणभारी त्रिपिटकधारी ।
मौर्य्यकुलाब्धिप्रभवसुधांशु
र्जन्मनि जन्मन्यपि मम मित्रम् ॥"

"May it happen that the virtuous Sri Rahula—a profound scholar having a thorough knowledge of the three Pitakas—like unto the moon shining above the (milky) ocean-like Mauryya race, may be my friend in all my subsequent births," showing thereby that, Sri Rahula belonged to the Mauryya race, which is a subdivision of the Sakya race. As the princes of this race, who came to Ceylon, were in the habit of invoking the blessing of the deity Skandha, the race became famous by the name of "Skandhawara race." Hence it has been mentioned in some books that, Sri Rahula was born in the "Skandhawara race," which is identical with the Mauryya race.

In the "Wartharatnakara Panchika" Pandit Rama Chandrabharati says:—

"श्रीमद्राहुलपादतस्त्रिपिटकाचार्य्याद्गुरोर्निर्म्मलं
बौद्धं शास्त्रमधीत्य यस्तुशरणं रत्नत्रयं शिश्रिये ।
यो बौद्धागमचक्रवर्त्तिपदवीं लङ्केश्वराल्लब्धवान्
स श्रीमानिह सर्व्वशास्त्रनिपुणो व्याख्यामिमां व्यातनोत् ॥"

"This commentary was written by one proficient in all the sciences, who having learnt the good Law of Buddha from the Venerable Sri Rahula—teacher of the three Pitakas—followed the Three Guides, and received from his Majesty the King (Parakramabahu) of Ceylon the title of Bauddhagama Chakravarti."

As it is my earnest desire to make the "Bhakti Sataka" useful to those who are, at present, only imperfectly acquainted with Buddhism, I have written this commentary called Ratnamala to enable them to easily understand the real meaning of the text in accordance with the rules of Buddhism. In many instances, I have quoted from other works on Buddhism. The author, Pandit Rama Chandrabharati, having thoroughly acquainted himself with the tenets of Lord Buddha and also with the accepted

interpretation of his Doctrine, and having accepted the Truth, as it is the duty of every learned man, and also having realized that, there is nothing more important than happiness in our next birth, followed the religion of his conviction.

May it please the learned readers to correct any errors that might have inadvertantly crept into the text or the commentary.

C. A. Seelakkhandha.

'Sailabriaharama,'
Dodanduwa, Ceylon,
*January* 1896.

# भक्तिशतकम् ।

—o◯o—

नमस्तस्मै भगवतेऽर्हते सम्यक्सम्बुद्धाय ।

ज्ञानं यस्य समस्तवस्तुविषयं यस्याऽनवद्यं वचो
यस्मिन् रागलवोऽपि नैव न पुनर्द्वेषो न मोहस्तथा ।
यस्याऽहेतुरनन्तसत्वा सुखदाऽनल्पा कृपा माधुरी
बुद्धो वा गिरिशोऽथवा स भगवांस्तस्मै नमस्कुर्महे ॥ १ ॥

देवः शम्भुर्न वैरी हरिरपि न रिपुः केवली नो सपत्नो
नोऽदासीनः स्वयम्भुर्न च पुनरपरे ते परे वासवाद्याः ।
शास्ता बुद्धो न बन्धुर्जगति न जनको नैक गोत्रैकजातिः
किन्त्वेषां वीतरागो भवति सकलविद्यः सुधीभिः स सेव्यः ॥२॥

---

प्रणम्य परमं बुद्धं सर्व्वलोकैकनायकम् ।
क्रियते रत्नमालाख्या व्याख्या भक्तिमतां मुदे ॥ ॥

काव्यमिदं महाकविः श्रीरामचन्द्रकविभारतिर्भगवति शाक्यमुनौ स्वभक्त्यतिशय-सन्दर्शनार्थं विरचयामास । तत्राऽदौ यस्य कस्यचिच्छास्तु विशिष्टगुणान् प्रामाणिकान् कृत्वा अनियमवशादेव नमस्कारं दर्शयितुं ज्ञानमित्यादिमाह । यस्य महात्मनः ज्ञानं समस्त-वस्तुविषयं सकलेषु वस्तुषु व्याप्तम् । सकलेषु ज्ञेयमण्डलेषु प्रवर्त्ततेत्यर्थः । यस्य वचः वचनम् । अनवद्यं निर्दोषम् । क्लेशापगमत्वात् परिशुद्ध इति भावः । यस्मिन् रागलवः तृष्णालेशः अपि नैव नास्त्येव । पुनः द्वेषः अपि नास्ति । तथा तद्वत् । मोहः अविद्या अपि नास्ति । यस्य अहेतुः लाभादिनिरपेक्षका । अनल्पा महती बहुला वा । कृपा माधुरी कृपायाः मधुरता । अनन्तानां प्रमाणरहितानां सत्वानां प्रजानां सुखदा सुखदाता । सः भगवान् बुद्धो वा सम्बुद्धो वा भवतु । अथवा गिरिशः शम्भुर्वा भवतु । तस्मै नमस्कुर्महे नमस्कारं कुर्म्मः । वयमिति शेषः । शार्दूल-विक्रीडितं वृत्तम् । तल्लक्षणमुक्तं रत्नाकरे । सूर्य्याश्वैर्म्मसजस्तथा सगुरवः शार्दूलविक्री-डितमिति ॥ १ ॥

देवइति । शम्भुर्देवः ईश्वरदेवः अपि । न वैरी न शत्रुः । भवतीत्यत्र अन्वयः । ज्ञानवतामितिशेषः । हरिः वासुदेवः अपि । न रिपुः वैरी न भवति । केवली

**ब्रह्माविद्याभिभूतो दुरधिगममहामायया ऽऽलिङ्गितोऽसौ**
**विष्णू रागातिरेकान्निजवपुषि धृता पार्व्वती शङ्करेण ।**
**वीताविद्यो विमायो जगति स भगवान् वीतरागो मुनीन्द्रः**
**कः सेव्यो बुद्धिमद्भिर्वदत वदत मे भ्रातरस्तेषु मुक्त्यै ॥ ३ ॥**

---

क्षपणकः अपि। नो सपत्नः शत्रुर्न भवति। अत्र क्षपणकस्तु संन्यासिभेद इति केषां-चिन्मतिः। विषयरागं क्षपयतीति निर्वचनात् पूरणकाश्यपादिनिर्ग्रन्थविशेषो वेति मन्मतिः। अपरे देवशब्दसाहचर्य्यात् केवलीति एको देवविशेष इति पठन्ति। तत्तु विचारणीयम्। स्वयम्भुः ब्रह्मा अपि। न उदासीनः मध्यस्थो न भवति। पुनः अपरे अन्ये। हरादिभ्यो देवेभ्य इति यावत्। ते प्रसिद्धाः वासवाद्याः इन्द्रादयो देवा अपि। परे न वैरिणो न भवन्ति। जगति त्रिभुवने। शास्ता (सत्वानां सान्दृ-ष्टिकैः साम्परायिकैः परमार्थधर्म्मैः) अनुशासकः। बुद्धः सम्बुद्धः अपि। न बन्धुः ज्ञातिर्न भवति। न जनकः पिता च न भवति। नैकगोत्रः समानगोत्रो न भवति। नैक-जातिः समानजातिश्च न भवति। किन्तु एषां ईश्वरादीनां देवानाम्। यः महात्मा वीतरागः समस्तवस्तुषु अत्यन्तप्रहीनरागः सन्। सकलवित् सर्व्वज्ञः। संस्कारविकार-लक्षण-निर्वाण-प्रज्ञप्तिवशात् पञ्चविधं ज्ञेयमण्डलं करतलामलकक्रमेण निःशेषं अवगत-वानिति भावः। सः महात्मा। सुधीभिः पण्डितैः। संसारदुःखाद्विमोक्तुकामै र्जनै-रिति भावः। सेव्यः अतिशयभक्त्या सेवनीयः। अपरे असेवनीया इति सूचिताः। स्रग्धरावृत्तम्। तदुक्तं रत्नाकरे। म्रभ्नै र्यानांत्रयेनत्रिमुनियतियुता स्रग्धरा कीर्त्तिते-यमिति ॥ २ ॥

इदानीं ब्रह्मादीनां देवानां रागादिमलैर्दूषितत्वात् सुधीभिः कः सेव्यः को न सेव्य इति निर्णयितुं ब्रह्मा इत्यादिमाह। ब्रह्मा स्वयम्भुः। वेदान्तवादिभिः अपरिमितसुखज्ञानस्व-रूपमित्युक्तो ब्रह्म-पदार्थ इति यावत्। अविद्या मूलाविद्या तुलाविद्येति द्वे भवतः ताभ्यां द्वाभ्यामज्ञानाभ्याम्। अभिभूतः पराभूतः। व्याकुलित इत्यर्थः। वेदान्तमते भावाभावाभ्यामनिर्वाच्या अचेतनया मायया च। असौ विष्णुः वैष्णवैर्जगदन्तरात्मेत्युक्तो हरिः। दुरधिगमा दुर्विज्ञेया महामाया दृढनिकृतिः तया। आलिङ्गितः परिरम्भितः। अन्योन्यसंश्लेषित इत्यर्थः। शङ्करेण "ईश एवाहमत्यर्थं न च मामीशते परे। ददामि सदैश्वर्य्यं मीश्वरस्तेन कीर्त्यते" इत्युक्तलक्षणेन। "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामा वसायिता" इत्युक्ताद्यष्टगुणैरुपेत इति शैवैर्वर्णितेन हरेण। रागातिरेकात् अधिकरागत्वात्। पार्व्वती गौरी। निजवपुषि

ब्राह्मं वैष्णवमैश्वरञ्च बहुधा लब्ध्वा पदं हेतुतः
संसारे वत संसरन्ति पुनरप्येकान्तदुःखास्पदे।
किन्तै र्देहभृतामपायबहुलै राद्यन्तवद्भि स्पदै
स्तस्मान्नित्यमनादिमध्यनिधनं बौद्धं पदं प्रार्थ्यताम् ॥ ४ ॥

चिदाकारं सूक्ष्मं विभु विशदमाकाररहितं
निरीहं निरूपं निरवधि कृपाबीजमजरम्।
समस्तज्ञं सर्व्वोपधिरहितमैश्वर्याद्म्तदं
जितानङ्गैः सेव्यं भवतु मम तद्वस्तु शरणम् ॥ ५ ॥

---

स्वदेहे। धृता धार्य्यते। जगति लोके। भगवान् भग्नरागादिगुणैर्युक्तः। सः मुनीन्द्रः मुनिश्रेष्ठः। वीता अपगता अविद्या यस्मात् स। वीताविद्याः। अविद्यया विगतः। दूरीकृताशेषविद्य इत्यर्थ इति यावत्। विमायः मायया अपगतः। व्यपगतमाय इत्यर्थः। वीतरागः विगतकामः। सकलेषु वस्तुषु निरालय इत्यर्थः। अतः तेषु ब्रह्मादिषु। बुद्धिमद्भिः पण्डितैः। मुक्तौ संसारविमुक्तौ। कः महात्मा। सेव्यः आश्रयणीय इति। मे भ्रातरः! मम सहोदराः! वदत वदत यूयं कथयत कथयतेति आम्रेडितम्। आम्रेडितं नाम द्विर्वि कथनम्। तदुक्तं ग्रन्थान्तरे। भये क्रोधे प्रशंसायां त्वरिते कौतुहलध्वनौ। हास्ये शोके प्रसादे च र्य्यादाम्रेडितं बुध इति। अत्रापि स्रग्धरावृत्तम् ॥ ३ ॥

तदनन्तरं निर्व्वाणसुखं वर्णयति ब्राह्ममित्यादिना। प्राणिनः बहुधा अनेकधा। बहुषु वारेष्विति यावत्। ब्राह्मं ब्रह्मसम्बन्धं ब्रह्मना प्रोक्तं वा। वैष्णवं विष्णुसम्बन्धं विष्णुना प्रकाशितं वा। ऐश्वरम् ईश्वरसम्बन्धं ईश्वरेण प्रणीतं वा। पदं पदवीम्। मोक्षमित्यर्थः। लब्ध्वा संप्राप्य। हेतुतः हेतुवशात्। तृष्णामूलस्य अविनष्टत्वादिति भावः। पुनरपि मुहुर्मुहुः। एकान्तेन अतिशयेन। दुःखास्पदे जातिजरामरणादि-दुःखस्य स्थानभूते। संसारे अनमताग्रे भववक्र। संसरन्ति जातितो जातिं प्रतिसन्धा-नाद्गच्छन्ति। वत इति विस्मये। अपायबहुलैः नरक-तिर्य्यक्-प्रेतादि-दुःखसमाकीर्णैः। आद्यन्तवद्भिः उत्पत्तिस्थितिसंहारसहितैः। तैः पदैः प्रसिद्धैः ब्रह्मादिपदैः। देहभृतां प्राणिनाम्। किं प्रयोजनम्?। किञ्चित् प्रयोजनं नास्तीति भावः। तस्मात् नित्यं अविनश्वरं। अनादिमध्यनिधनं उत्पत्तिस्थितिविनाशरहितं। बौद्धं बुद्धेन भगवता वर्णितम्। पदं अत्यन्तसुखं निर्व्वाणम्। प्रार्थ्यताम् अभिकाङ्क्ष्यताम्। सुधीभिरिति शेषः। इदमपि स्रग्धरावृत्तम् ॥ ४ ॥

इदानीं सर्व्वज्ञताज्ञानं वर्णयति चिदाकारमित्यादिना। सूक्ष्मं परवादीनामविषय-मतिनिपुणम्। उदयव्ययादि विदर्शनाज्ञानेनैवावगन्तव्यत्वादितिभावः। विभु समस्त-वस्तुव्यापि। अनन्तवस्तुविषयभावादिति भावः। विशदं निर्म्मलम्। रागादिमल-

**अणीयोऽणोः क्लेशाप्रतिहतमनन्तञ्च महतो**
**महीयो माहात्म्यप्रविजितजगद्भूरिकरुणम् ।**
**द्विबाहुं निर्व्वाहुं द्विपदमपदं सत्रिवदनं**
**द्विनेत्रं निर्णेत्रं सगुणमगुणं तत्तु शरणम् ॥ ६ ॥**

---

रहितत्वादितिभावः । आकाररहितं ह्रस्वदीर्घादिसंस्थानविरहितम् । निरीहं तृष्णारहितम् ; निरूपं नीलपीतादिवर्णरहितम् । निरवधि निःसीमम् । अवधिरहितमित्यर्थः । कृपाबीजं महाकरुणाया उत्पत्तिकारणं । अजरं जरारहितं । त्रिषु कालेषु एकसदृशमित्यर्थः । क्वचित् अमोहमिति भावः । समस्तज्ञं सर्व्वज्ञम् । सर्व्वोपधिरहितं सकलेभ्यः कामस्कन्धक्लेशाभिसंस्कारोपधिभ्यो विमुक्तम् । ऐशात् श्रेष्ठभावात् । अथवा अष्टसु पर्षत्सु प्रधानो भूत्वा धर्म्मदेशनाच्च । तदुक्तम् । त्रयस्त्रिंशाः द्विजाः चत्वा मारग्टहपती तथा। श्रमणाश्च सुराश्चातुर्म्महाराजेऽपि ब्रह्मन' । ते स्युः सर्व्वविदः शाक्यमुनेरष्टपरिच्छदा इति । अमृतदं निर्व्वाणसुखदायकम्। जितः पराजितः अनङ्गः कन्दर्पो यैस्तथोक्तैः । क्षीणास्रवैः श्रावकैरिति यावत् । सेव्यं सेवनीयम् । चिदाकारं ज्ञानस्वरूपम् । अत्र चिच्छब्दो ज्ञाने । प्रेक्षोपलब्धिश्चित् संविदित्यमरः । तद्वस्तु (भगवतो गौतमस्य) प्रसिद्धं सर्व्वज्ञताज्ञानम् । मम शरणं प्रतिष्ठा । भवत्विति शेषः । शिखरिणीवृत्तम् । तल्लक्षणमुक्तं रत्नाकरे । रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति ॥ ५ ॥

तदनन्तरं भगवन्तं गौतमं वर्णयितुम् अणीय इत्यादिमाह । तत्र अणोः सूक्ष्मस्य। अणीयः अतिशयेन सूक्ष्मम् । महतः महद्द्रव्यस्य । महीयः अतिशयेन महत् । क्लेशैः रागादिभिः अकुशलैः । अप्रतिहतम् अनभिभूतम् । अनन्तम् अपर्य्यवसानम् । माहात्म्यैः महानुभावगुणैः । प्रविजितं पराजितं जगत् लोको येन तथोक्तम् । भूरि महती करुणा यस्य तथोक्तम् । द्विबाहुं बाहुयुग्मम् । आज्ञाहस्तेन च श्रद्धाहस्तेन चेति द्वाभ्यां हस्ताभ्यां समन्वागतमिति भावः । निर्व्वाहुं उपादानानामरूपसङ्ख्यातपक्षद्वयरहितम्। द्विपदं चरणयुग्मम् । स्वभावपादेन च ऋद्धिपादेन चेति द्वाभ्यां पादाभ्यां समन्वागतमितिभावः। अपदम् उत्पत्तिस्थानरहितम् । सहत्रिवदनैस्त्रिमुखैः । तथोक्तम् । निरोधस्य हि त्रीणि मुखानि । कथम् ! अनिमित्तविमोक्षमुखम् अप्रणिहितविमोक्षमुखं शून्यताविमोक्षमुखमिति । तदुक्तम् अनुरुद्धाचार्य्येण । तत्र अनित्यानुदर्शना विपर्य्यासनिमित्तं मुञ्चती अनिमित्तानुदर्शना विमोक्षमुखं भवति । दुःखानुदर्शना तृष्णाप्रणिधिं मुञ्चती अप्रणिहितानुदर्शना विमोक्षमुखं भवति । अनात्मानुदर्शना आत्माभिनिवेशं मुञ्चता

सदानन्दं तथ्यं सरसहृदयं सूक्तिसदनं
सतां सेव्यं सम्यक्समधिगततत्त्वं सममनः।
स्वतस्सिद्धं साध्यं सकलफलदं सौम्यवदनं
सदीयं सर्व्वीयं भवतु मम तद्वस्तु शरणम् ॥७॥

स्वयम्भूताभिज्ञं भवभयहरं भीतिरहितं
स्फुरद्भाग्यं भोगोज्झितऽमहतवीर्य्यं मदनजित्।
चतुर्मार्गं शुद्धप्रकृति च तथाऽकर्त्तृकऽमिदं
मुदं लोकोत्कृष्टामतनु तनुतां वस्तु जगताम् ॥८॥

---

शून्यातानुदर्शना विमोक्षमुखं भवति। मार्गो हि यदि अनित्यतो विपश्यति अनिमित्त-विमोक्षं नाम। यदि दुःखतो विपश्यति अप्रणिहितविमोक्षं नाम। यदि अनात्मतो विपश्यति शून्यताविमोक्षं नाम। एवं मार्गो विदर्शना वशात्त्रीणि नामानि लभते। द्विनेत्रं नयनद्वययुक्तम्। स्वभावनेत्रेण च दिव्यनेत्रेण चेति द्वाभ्यां नेत्राभ्यां समन्वागतमिति भावः। निर्णेत्रं शाश्वतोच्छेददृष्टिरहितम्। सगुणं शीलसमाध्यादि गुणयुक्तम्। अगुणं गुण-त्रयव्यपगतम्। सत्त्वरजस्तमोगुणविरहितमिति भावः। तत् प्रसिद्धं बुद्धपदार्थम्। ममेति पूर्व्वेणान्वयः। शरणं प्रतिष्ठा। भवत्विति शेषः। अत्रापि शिखरिणीवृत्तम् ॥ ६ ॥

सदानन्दमिति। सतां साधूनाम् आनन्दं सन्तोषकरम्। उद्घटितज्ञादीनाम् आनन्दजनकमिति यावत्। तथ्यम् अवितथम्। यथार्थावबोधत्वादेव सत्यमित्यर्थः। सरसहृदयम् अर्हत्वादिगुणयुक्तचित्तम्। सूक्तिसदनं धर्म्माणां मन्दिरम्। त्रिपिटक-धर्म्मसंस्थापितगृहवदित्यर्थः। सतां सेव्यं साधुभिराश्रयनीयम्। सम्यक् याथावत्तः स्वयं समधिगततत्त्वम् अवगतानित्यादिस्वभावम्। सममनः समचित्तम्। शत्रुमित्रोदासीनेषु सर्व्वेषु एकसदृशचित्तमिति भावः। स्वतस्सिद्धम् आत्मना परिनिष्पन्नम्। परोपदेशं विना आत्मनैव समुद्योगेन रागादिभिः शेषमलैर्विविक्तमित्यर्थः। साध्यं सकलबोधिसत्त्वैः साधनीयम्। सकलफलदं स्वर्गमोक्षसुखदायकम्। सौम्यवदनम् प्रियदर्शनमुखमण्डलम्। सदीयं साधूनां हितम्। सर्व्वीयं सकलप्राणिनामपि हितम्। तद्वस्तु प्रसिद्धबुद्धपदार्थं मम शरणं भवतु। अत्रापि शीखरिणीवृत्तम् ॥ ७ ॥

स्वयमिति। स्वयम् आत्मना। भूताभिज्ञं संसिद्धषडभिज्ञागुणम्। आत्मना परिपूर्णं समर्थं शत्पारमितानुभावादुत्पन्नम् अद्विविधादिषडभिज्ञागुणैः युक्तमिति भावः। भव-

क्वचिन्नीलं पीतं क्वचिदपि च रक्तं क्वचिदपि
क्वचिच्चन्द्रच्छायां क्वचिदपि च माञ्जिष्ठरुचिरम्।
क्वचित् प्राभास्वर्य्यं यदऽयति च वर्णव्यतिकरा
च्छिखाषट्कं तैस्तै र्दधदुपरि तद्वस्तु शरणम्॥ ९॥

पराभेद्यं जाम्बूनदरुचिरवर्णं त्रिशरणं
त्रियानं त्रिप्रज्ञं त्रिभुवनभरं सत्त्ववचनम्।
कृपापात्रं मन्दस्मितऽमरुणसच्चीवरधरं
कृतध्यानं सिद्धासनघटितपादस्तु शरणम्॥ १०॥

---

भयहरं संसारभीतिनाशकम्। भीतिरहितं नष्टभयम्। चतुर्वैशारद्याभिज्ञानैः समन्वागतत्वाद् वीतभयमिति भावः। स्फुरद्भाग्यं भाग्यगुणैर्विकशत्। द्वात्रिंशद्वरमहापुरुषलक्षणैः समुपलक्षितत्वाद्भाग्ययुक्तमिति भावः। भोगोज्झितं त्यक्तकामसुखम्। अहतवीर्य्यं दशबलैः समन्वितम्। तत्तु मत्कृते सद्धर्म्ममकरन्दे विस्तरतो दर्शितम्। मदनजित् जितमारम्। मारं पराजित्वा सिद्धस्वाभिष्टार्थमित्यर्थः। तदपि सद्धर्म्ममकरन्दे द्रष्टव्यम्। चतुर्मार्गं प्राप्तचतुर्विधमार्गम् दृष्टिशङ्काक्लेशक्षयकारणं श्रोतापत्त्यादि चतुर्मार्गं संप्राप्तमिति भावः। तथा शुद्धप्रकृति निर्म्मलचित्तम्। अकर्त्तृकम् अपुनर्भवकारणम्। इदं वस्तु बुद्धपदार्थम्। जगतां प्राणिनाम्। लोकात् उत्कृष्टाम् उद्गताम्। लोकोत्तरमित्यर्थः। मुदं हर्षम्। अतनु बहुलम्। तनुतां कुर्व्वतामित्यर्थः। शिखरिणीवृत्तम्॥ ८॥

इदानीं भगवतो गौतमस्य षड्वर्णं वर्णयितुं क्वचिदित्यादिमाह। यत् यादृक्। वस्तु इति शेषः। क्वचित् कर्हचित्। नीलं नीलवर्णञ्च। क्वचित् अपि। पीतम् ईशद् रक्तवर्णञ्च। क्वचित् अपि। रक्तं लोहितवर्णञ्च। क्वचित् चन्द्रच्छायां चन्द्रकान्तिसदृशं श्वेतवर्णञ्च। क्वचित् अपि। माञ्जिष्ठरुचिरं मनोहरं माञ्जिष्ठवर्णवच्च। क्वचित् वर्णव्यतिकरात् नीलपीतादिवर्णसम्बन्धात्। प्राभास्वर्य्यम् प्रभास्वरवर्णञ्च। अयति प्राप्नोति च (तद्बुद्धपदार्थम्) तैः तैः नीलपीतादिभिः तत्तद्वर्णैः शिखाषट्कं षड्विधां शिखाम्। केतुमालामिति भावः। उपरि शीर्षादूर्द्धम्। दधत् दधानम्। तद्वस्तु मम शरणं भवत्विति शेषः। शिखरिणीवृत्तम्॥ ९॥

पराभेद्यमिति। परैर्विपक्षैः। शत्रुभिरिति यावत्। अभेद्यं न भेत्तव्यम्। वज्रसदृशकायत्वादपरैः कैश्चिदविदार्य्यमिति भावः। जाम्बुनदं जाम्बुनामकायां नद्यां जातं स्वर्णवत् रुचिरं मनोज्ञं वर्णं शरीरशोभा यस्य तथोक्तम्। त्रिशरणं शरणत्रयम्। बुद्धधर्म्मसङ्घसङ्घातवस्तुत्रयवशात् प्रतिष्ठाभूतमिति यावत्। त्रियानं यानत्रयम्। बुद्ध-प्रत्येकबुद्ध-श्रावक-संख्यातत्रित्वावबोधकरमिति भावः। त्रिप्रज्ञं प्रज्ञात्रयम्। अनित्य-

प्रसन्नं फुल्लेन्दीवरनयनयुग्मं त्रिपिटकं
मुहुर्व्याकुर्व्वाणं सुरनरगणेभ्यः करुणया।
परं शान्तं स्वर्णोपलरजतलोष्टेषु च समं
दृशां नव्यातिथ्यं भवतु मम तद्वस्तु शरणम्॥ ११॥

शरणऽमिति सदग्र्यं साधु गच्छामि बुद्धं
शरणऽमिति विरागाग्रीयमन्वेमि धर्म्मम्।
शरणऽमिति गणानामग्रियं यामि सङ्घं
शरणऽमिति पुनस्त्रीन् द्वित्रिवारं व्रजामि॥१२॥

---

दुःखानाशेति त्रिलक्षण प्रतिबोधकरज्ञानमित्यर्थः। त्रिभुवनभरं लोकत्रयवासिनां प्रतिष्ठाभूतम्। कामरूपारूपलोकेषु सत्वानां संसारमुक्तौ अतिशयप्रतिष्ठाभूतमिति भावः। सत् त्रिवचनं शोभनवचनत्रयम्। सूत्राभिधर्म्मविनयसङ्ख्यातै स्त्रिभिः सुभाषितै रुप-लक्षितमिति भावः। कृपागात्रं करुणाभाजनम्। मन्दस्मितं मन्दहास्यम्। ब्रह्म-विहारसमङ्गितया प्रसन्नमुखमण्डलमिति भावः। अरुणम् ईषद्रक्तवर्णम्। सच्चीवरधरं घटीकार ब्रह्मनादत्तं शोभनवस्त्राच्छादकरम्। कृतध्यानं भावितसमापत्तिम्। सिद्धा-सनवत् घटिते निबद्धे पादौ चरणे यस्य तथाभूतम्। तद्वस्तु प्रसिद्धं बुद्धपदार्थम्। मम शरणम्। भवत्विति अन्वयः। शिखरिणीवृत्तम्॥ १० ॥

प्रसन्नमिति। प्रसन्नं निर्म्मलम्। फुल्लं विकशितं इन्दीवरं नीलोत्पलं तेन सदृशं नयनयुग्मं नेत्रद्वन्द्वं यस्य तादृशम्। करुणया सुरनरेभ्यः दिव्यमनुष्येभ्यः। मुहुः पुनः पुनः। त्रिपिटकं सूत्रादित्रिपिटकधर्म्मम्। व्याकुर्वाणं प्रकाशयमानम्। परम् अत्यर्थम्। शान्तं शममुपगतम्। अन्तरिन्द्रियदमनादुपशान्तक्लेशमित्यर्थः। स्वर्णं कनकम् उपलं पाषाणं रजतं रूप्यं लोष्टं मृत्पिण्डम् एषु वस्तुषु। समं समानचित्तम्। दृशां नेत्राणाम्। सत्वाना मिति शेषः। नव्यं नूतनजातम् आतिथ्यं अतिथिनिमित्तकम्। नूतन प्राभृतवत् सन्निति भावः। तद्वस्तु प्रसिद्धबुद्धपदार्थम्। मम शरणं भवतु। शिखरिणी-वृत्तम्॥ ११ ॥

शरणमिति। सतां साधूनां वीतरागीनां वा अग्र्यं श्रेष्ठम्। बुद्धं शरणमिति संसारदुःखाद्विमुक्तौ प्रतिष्ठा भवतीति मत्वा साधु सम्यक्। गच्छामि भजामि। अहमिति शेषः। विरागानांवैराग्यधर्म्मानाम् अग्रियम् उत्तमम्। धर्म्मं नवलोकोत्तरधर्म्मम्।

पुनरपि शरणं व्रजामि बुद्धं
पुनरपि लोकगुरुं गुरुं करोमि ।
पुनरपि कथयामि नौमि वन्दे
त्वयि मम गौतम! नैव तृप्तिरास्ते ॥ १३ ॥

त्रिभुवनमसकृन्निरूप्य युष्मत्-
पदसरसीरुहरेणुमाश्रितोऽहम् ।
शरणमसमयञ्च दैवतं मे
गतिरपरा मम नास्ति नास्ति नास्ति ॥ १४ ॥

---

शरणमिति संसारदुःखविनाशाय प्रतिष्ठा भवतीति विचिन्त्य साधु सम्यक् अर्व्वामि भजामि । गणानां सकलगणानाम् । अग्रियं श्रेष्ठम् । सङ्घम् (भगवतः शाक्यमुनेः श्रावकम्) अष्टार्य्यसङ्घम् । शरणमिति भवदुःखाद्विमुक्तौ प्रतिष्ठा भवतीति मत्वा साधु सम्यक् यामि आश्रयामि । पुनः द्वित्रिवारं द्विवारं त्रिवारम् । त्रीन् बुद्ध धर्म्मसङ्घ सङ्ख्यातं त्रिविध-रत्नम् । शरणमिति मम प्रतिष्ठा भवतीति मत्वा । व्रजामि अतिशयभक्त्या भजामीत्यर्थः । मालिनीवृत्तम् । तदुक्तं रत्नाकरे । ननमयययुतेयं मालिनी भोगिलोकैरिति ॥ १२ ॥

पुनरपीति । अहं पुनः अपि बुद्धं शरणं प्रतिष्ठा इति मत्वा व्रजामि भजामि । अहं पुनः अपि लोकगुरुं त्रैलोक्याचार्य्यम् । गुरुं करोमि धर्म्मोपदेशकं करोमि । अहं पुनः अपि कथयामि वर्णयामि । तस्य भगवतो गुणमिति शेषः । नौमि स्तुतिं करोमि । गद्यपद्यैरिति शेषः । वन्दे कायवाङ्मनोभि र्नमस्कारं करोमि । हे गौतम! त्वयि मम तृप्तिः शरणगमनादिषु अतिशयेन प्रीणनम् । नैव आस्ते न भवत्येवेत्यर्थः । पुष्पिताग्रावृत्तम् । तदुक्तं रत्नाकरे । अयुजि नयुगरेफतोयकारो युजिच नौज जरगाश्च पुष्पिताग्रा इति ॥ १३ ॥

त्रिभुवनमिति । अहं त्रिभुवनं त्रिलोकम् । स्वर्गमर्त्यपातालेषु प्रथितान् सर्व्वान् मुनीनिति भावः । असकृत् अनेकवारम् निरूप्य परीक्ष्य । युष्मतां भवताम् । पद-सरसीरुहस्य पादपद्मस्य रेणुं धूलीम् । आश्रितः । अयं श्रीपादरेणुः । मे शरणं प्रतिष्ठा । अयञ्च श्रीपादरेणुः मे दैवतं देवता एव भवति । मम अपरा गतिः अन्या प्रतिष्ठा । नास्ति नास्ति नास्तीति आम्रेडितम् । पुष्पिताग्रावृत्तम् ॥ १४ ॥

अनित्यमखिलं दुःखमनात्मेति प्रवादिने।
नमो बुद्धाय धर्म्माय सङ्घाय च नमो नमः ॥ १५ ॥

भो वीतराग भगवंस्तव पादमेव
वन्दे मुनीन्द्र मुहुरेवमिमं प्रवन्दे।
भूयः पुनः पुनरिमं पुरतः परस्तात्
पार्श्वद्वयोरुपरि दिक्षु विदिक्षु वन्दे ॥ १६ ॥

गतमिह भवता पथा च येन
स्थितमपि यत्र च यत्र वा निषस्म्।
शयितमपि मुनीन्द्र यत्र योगात्
तदपि शतं प्रणमामि पुण्यतीर्थम् ॥ १७ ॥

---

अनित्यमिति। अखिलं समस्तम्। संस्कारमिति शेषः। अनित्यम् (उत्पादव्ययपरिच्छिन्नत्वादिभि र्हेतुभिर्देहमेतत्) नियतं न भवतीति च। दुःखं (जातिजरामरणादिभिःसुखं), न भवतीति च। अनात्मा (अवश्यत्वादिभिः) एकस्वरूपं न भवतीति च। प्रवादिने प्रकाशते बुद्धाय नमः धर्म्माय नमः सङ्घाय नमः। अस्तीत्यत्राम्वयः। पथ्यावक्त्रवृत्तम्। तदुक्तं रत्नाकरे। युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितमिति ॥ १५ ॥

भो इति। वीतराग निरालय भो तव पादम् एव चरणम् एव। वन्दे सम्यक् प्रणामं करोमि। हे मुनीन्द्र मुनिश्रेष्ठ एवं मुहुः क्षणे क्षणे। इमं तव श्रीचरणम् एव। भूयः प्रायशः। पुनः पुनः वारं वारम्। पुरतः अग्रे च। परस्तात् पश्चाच्च। पार्श्वद्वयोः उभयोः पार्श्वयोश्च। उपरि ऊर्द्ध्वे च। दिक्षु पूर्व्वादिषु चतसृषु दिशासु च। विदिक्षु चतसृषु अनुदिशासु च। इमं तव श्रीपादम् एव वन्दे प्रणामं करोमि। वसन्ततिलकं वृत्तम्। तदुक्तं रत्नाकरे। उक्ता वसन्ततिलका तभजा जगौग इति ॥ १६ ॥

गतमिति। मुनीन्द्र हे मुनिश्रेष्ठ इह जगति। भवता त्वया। येन पथा मार्गेण। गतं यातञ्च। यत्र च स्थाने। स्थितं कृतम् स्थानं अपि। यत्र स्थाने वा निषस्म्। यत्र स्थाने। योगात् समाधिना। शयितं शयनं कृतम् अपि। तत्

समजनि भगवान् स्वयं स्म यस्मिन्
सकलमबोधि च यत्र धर्म्मचक्रम्।
विशदतरमदीपि यत्र यस्मि-
न्नमृतिमपूरि तदप्यहं नमामि ॥ १८ ॥

सर्व्वज्ञवक्त्रसरसीरुहराजहंसं
कुन्देन्दुसुन्दररुचिं सुरवृन्दवन्द्यम्।
सद्धर्म्मचक्रसहजं जनपारिजातं
श्रीदन्तधातुममलं प्रणमामि भक्त्या ॥ १९ ॥

---

पुण्यतीर्थं कुशलकरणस्थानम् अपि। शतं शतवारम्। प्रणमामि प्रणामं करोमीत्यर्थः। पुष्पिताग्रावृत्तम् ॥ १७ ॥

समजनीति। भगवान् यस्मिन् स्थाने। स अजनि स्म सञ्जातवान्। तत् कपिलवास्तु-नगरे लुम्बिनी नाम उद्यानम् अपि। यत्र स्थाने। सकलं सर्व्वधर्म्मम्। स्वयम् अबोधि अवगतवान्। तत् अश्वत्थबोधिद्रुममूलम् अपि। यत्र स्थाने। विशदतरम् अतिशयनिर्म्मलम्। धर्म्मचक्रं नाम सूत्रम्। अदीपि प्रकाशितवान्। तत् वाराणस्याम् ऋषिपतनारामम् अपि। यस्मिन् स्थाने। अमृतम् अपूरि निरुपधिशेषं निर्व्वाणं परिपूर्णम्। तत् कुशिनारापुरिशालवनोद्यानम् अपि। अहं नमामि। पुष्पिताग्रावृत्तम् ॥ १८ ॥

सर्व्वज्ञ इति। सर्व्वज्ञस्य सर्व्वदर्शिनः सम्बुद्धस्य वक्त्रसरसीरुहम् मुखकमलं तस्मिन् राजहंसं हंसराजसदृशम्। कुन्दं माघ्यम्। वासन्तिकपुष्पविशेषमित्यर्थः। इन्दुश्चन्द्रः तयोः सुन्दरं शोभनं रुचिः शोभा यस्य तादृशम्। सुरवृन्दैर्देवसमूहैः वन्द्यं वन्दनीयम्। सद्धर्म्मचक्रं चतुरशीति धर्म्मस्कन्ध सहस्राणि तेषां सहजं सहजभूतम्। जनानां प्राणीनाम्। सकलबौद्धोपासकानामितिभावः। पारिजातः कल्पतरुः तेन सदृशम्। अमलं निर्म्मलम्। श्रीदन्तधातुं भगवतो दंष्ट्राधातुम्। भक्त्या आदरेण। प्रणमामि नमस्कारं करोमीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ १९ ॥

नागालयोपरिधरालयचक्रवाल-
मूर्ध्नि त्रिकूटगतकाञ्चनशैलशृङ्गे ।
बोधिद्रुमूल निहिताक्षयधातुबिम्बं
बिभ्रन्नमामि शिरसा जिनचैत्यमग्र्यम् ॥ २० ॥

हैमालवाल-वलयान्तर-रत्नवेदी-
वज्रासनोल्लसितमूलमगेन्द्रबोधिम् ।
यं प्राप्य मारविजयानुपदं प्रपेदे
सर्व्वज्ञतां स भगवांस्तमहं नमामि ॥ २१ ॥

---

नागालय इति । नागलयः रसातलः । मार्ज्जेरिक नागभवनमिति भावः । तस्मिंश्च । उपरि धरालयः वसुधा तस्मिंश्च । चक्रवाल· लोकालोकपर्व्वतः तस्य मूर्ध्नि शिरसि च । त्रिकूटः त्रिकूटपर्व्वतः तस्मिन् गतः प्रतिष्ठितः । काञ्चनशैलः सुमेरुः तस्य शृङ्गे शिखरे च । त्रयस्त्रिंशद्देवलोक इति भावः । तस्मिन् प्रवर्त्तमानम् । अग्र्यम् उत्तमम् । जिनचैत्यं सर्व्वज्ञ-स्तूपञ्च । बोधिद्रुः अश्वत्थबोधिवृक्षः तस्य मूले समीपे च । अत्र समीपार्थो हि मूलशब्दः । निहिताः प्रतिष्ठिताः अक्षयाः (आशासनाम्नर्धानाम्) अयरक्षिताः धातवः तान् प्रतिष्ठाप्य कृतं बिम्बं प्रतिमाञ्च । शिरसा मूर्ध्ना । बिभ्रन् उद्वहन् । नमामि नमस्कारं करोमीत्यर्थः । अत्रापि वसन्ततिलकं वृत्तम् ॥ २० ॥

हैमाल इति । सः भगवान् । यं बोधिमूलम् । प्राप्य लब्ध्वा । मारविजयानुपदं मारदेवपुत्रस्य क्लेशमाराणां वा विजयानन्तरम् । सर्व्वज्ञतां सम्बुद्धभावम् प्रपेदे प्राप्तवान् । तन्मन्कृते सद्धर्म्ममकरन्दे दृष्टव्यम् । हैमः स्वर्णमयः आलवालः वृक्षमूले सेकार्थं कृतो जलाधारः तस्य वलयो वेष्टनभूमिः तस्य अन्तरे मध्ये प्रतिष्ठिता रत्नानां मणीनां वेदी परिष्कृतभूमिर्यस्मिन् तादृशम् । वज्रासनेन उल्लसितं उद्दीप्तं मूलं यस्य तथोक्तम् । अगेन्द्रबोधिं बोधिवृक्षराजम् । अहं नमामि । वसन्ततिलकं वृत्तम् ॥ २१ ॥

मूर्द्धन् बुद्धं नम त्वं श्रवण शृणु सदा धर्म्ममद्वैधवादि-
प्रोक्तं सर्व्वज्ञरूपं नयन निरुपमं पश्य जिघ्राङ्घ्रिपद्मम् ।
घ्राण त्वं चार्कबन्धोःस्तुहि सखि रसने श्रीघनं पूजयेथाः
सिद्धं पाणे व्रजाङ्घ्रे जिनसदनमदस्सद्गुणं चित्त चिन्त्य
॥ २२ ॥

बुद्धो धर्म्मश्च सङ्घस्त्रितयमिति महानर्घरत्नं मुमुक्षोः
अद्यारभ्याहमस्मै त्रिभवभयभिदे सन्ददाम्यात्मभावम् ।
एषोहं तत्परःस्याम्परमयनमितो नास्ति मे सत्यमेतत्
स्यामस्याहन्तु शिष्यस्त्रिदशनुतमिदं कोटि कृत्वो नमामि ॥
॥ २३ ॥

---

मूर्द्धनिति । मूर्द्धन् हे वराङ्ग ममेति शेषः । त्वं बुद्धं नम अभिवन्द्य । श्रवण हे कर्ण त्वं सदा सर्व्वकाले । अद्वैधवादिना सम्बुद्धेन प्रोक्तं देशितं धर्म्मं त्रिपिटकम् । शृणु श्रवणपथगतं कुरु । नयन हे नेत्र त्वं निरुपमम् उपमाविषयातिक्रान्तम् । सर्व्वज्ञरूपं बुद्धदेहम् । पश्य विलोकय । घ्राण हे नासे त्व अङ्घ्रिपद्मं चरणकमलम् । जिघ्र चुम्ब । सखि आलि रसने हे जिह्वे त्वम् अर्कबन्धोः शाक्यमुनेः । स्तुहि स्तवं कुरु । पाणे हे कर त्वं सिद्धं परिनिष्पन्नम् । श्रीघनं बुद्धम् । पूजयेथाः अर्चय । अङ्घ्रे हे चरण त्वं जिनसदनं बुद्धमन्दिरं विहारमित्यर्थः । व्रज गच्छ । चित्त हे मनः त्वम् अदः सद्गुणं नवार्हत्व ादिगुणम् । बुद्धस्येति शेषः । चिन्त्य चिन्तनं कुर्व्वित्यर्थः । स्रग्धरा-वृत्तम् ॥ २२ ॥

बुद्ध इति । मुमुक्षोः मोक्षुकामस्य । संसारदुःखान्यपहन्तुकामस्य जनस्येति भावः । बुद्धः सम्बुद्धः । धर्म्मः नवलोकोत्तरधर्म्मश्च । सङ्घः अष्टार्य्यपुद्गलसङ्घश्चेति । त्रितयं वस्तुत्रयम् । महानर्घरत्नं पूजनीयश्रेष्ठरत्नम् । अहम् अद्यारभ्य अस्मात् कालात् प्रभृति । अस्मै वस्तुत्रयाय । त्रिभवभयभिदे भवत्रयवर्त्तिनो दुःखस्य भेदनार्थम् । आत्मभावं शरीरम् । स्वात्मपञ्चकमिति भावः । सन्ददामि परित्यजामि । इदमात्मसन्निर्य्यातन-शरणागमनं नाम । एषः अहं तत्परः स्याम् तद्वस्तुत्रयं परमं कृत्वा अद्यारभ्य वर्त्स्यामि । मे मम इतः परम् अयनं मार्गम् नास्ति । एतत् सत्यम् । इदं तत्परायणशरणागमनं नाम । अहन्तु अस्य वस्तुत्रयस्य । अद्यारभ्य शिष्यः स्याम् अन्तेवासी भविष्यामि ।

**[न]ाहं लाभार्च्चनार्थी न च भयचकितो नापि सत्कीर्त्तिकामो**
**[न] त्वं धर्म्मांशुवंशप्रभव इति मुने नापि विद्याशया ते ।**
**[प]ारम्पर्य्यान्न च त्वां शरणमुपगतः किन्तु ते सार्व्वजन्यं**
**[स]म्यग्ज्ञानं समीक्ष्य त्वयि भवजलधिं सन्तरीतुं प्रवृत्तः ॥**
**[२४॥**

**त्वद्वैराग्य-समस्तभूत-करुणा-प्रज्ञादिनानागुण-**
**स्फूर्जच्चन्दनपङ्कसिन्धु-पतितो गन्तुं क्षमो नान्यतः ।**
**भूपा वा यदि दण्डयन्ति विबुधा निन्दन्ति वा बान्धवाः**
**मुञ्चन्ति क्षणमप्यहं जिनपितः जीवामि न त्वां विना ॥**
**[२५॥**

---

इदं शिष्यभावोपगमशरणागमनं नाम । त्रिदशनुतं देवैःस्तुतम् । इदं वस्तुत्रयम् । कोटिकृत्वः कोटिवारम् । अनेकधा इत्यर्थः । नमामि कायवाङ्मनोभिर्नमस्कारं करोमीत्यर्थः । इदं प्रणिपातशरणागमनं नाम । अस्मिन्तु बुद्धशासने चत्वारि शरणागमनानि । तानि चत्वारि आत्मसन्निर्य्यातनादीनि इमान्येव भवन्ति । तेषां केचिदेकेन अन्ये द्वाभ्याम् अपरे त्रिभिः परे चतुर्भिश्च शरणं गच्छन्ति । अयं कविश्चतुर्भिरेव प्रकारैःशरणगतभावं दर्शयति । स्रग्धरावृत्तम् ॥ २१ ॥

इदानीं लाभाद्यनपेक्षकतया शरणगतभावं दर्शयति नाहमित्यादीना । मुने हे सर्व्वज्ञ । अहं लाभार्च्चनार्थी लाभसत्कारादिं कामयमानः त्वां शरणं कृत्वा न उपगतः न गच्छेयम् । भयचकितः भयं भीतिः । तच्च राजचोरदण्ड परानुवादवशादनेकविधं तेन चकितः त्रस्तः । सञ्जातभयः सन्नित्यर्थः । त्वां शरणं न उपगतः । त्वं भवान् । धर्म्मांशुवंशः सूर्य्यवंशः तस्मिन् प्रभव इति सञ्जातो न्वपवर इति मन्यमानः । त्वां शरणं न उपगतः । ते भवतः । विद्यानां (श्रुति स्मृति व्याकरणादीनाम्) शास्त्राणाम् । आशया इच्छया । आचार्य्य इति मन्यमानः त्वां शरणं न उपगतः । पारम्पर्य्यात् पितृपितामहादिवंशान्मम ज्ञातिरिति मन्यमानः त्वां शरणं न उपगतः । एते सर्व्वे शरणागमनदोषाः । यो लाभार्थी वा भयेन वा कीर्त्तिकामो वा राजा इति वा आचार्य्य इति वा ज्ञातिरिति वा मत्वा शरणं गच्छति । स च शरणगतो न भवति । तत्तु शरणं मुक्तौ न वर्त्तते । इमान् सर्व्वान् दोषान् प्रहाय शरणं गन्तव्यम् । तद्दर्शयितुं किन्त्वादिमाह । किन्तु इति प्रागुक्तविपक्षार्थद्योतकः । ते भवतः । सार्व्वजन्यं सर्व्वजनहितकारिणीं करुणाञ्च । सम्यग्ज्ञानं सम्बोधिज्ञानञ्च । समीक्ष्य विलोक्य । भवजलधिं संसारसागरम् । सन्तरीतुम् उत्तर्तुम् । त्वयि भवति । प्रवृत्तः उपासकभावेन प्राप्तः अस्मीत्यर्थः । स्रग्धरावृत्तम् ॥ २४ ॥

त्वदिति । त्वत् भवताम् । वैराग्यं वीतरागभावश्च । समस्तभूतेषु सकलसत्वेषु करुणा च प्रज्ञादिनानागुणा च त एव स्फूर्जन्तः सुगन्धीकुर्व्वन्तः चन्दनानां पङ्काः कर्द्दमाः

स्वर्गे वा वसतिर्म्ममाऽस्तु निरये तिर्य्यक्षु किंवासुरे
प्रेतानां नगरेऽथवा नरपुरे क्वाप्यन्यतः कर्म्मणा ।
भो सर्व्वज्ञ ततस्ततस्तव गुणान् कर्णामृतस्यन्दिनो
निष्पापानवलम्बतां मम मनो मान्या सुखप्रार्थना ॥ २६ ॥

तवैवाहं दासो गुणपण गृहीतोऽस्मि भवता
तवैवाहं शिष्यः स्ववचनविनीतोऽस्मि भवता ।
तवैवाहं पुत्रः स्मृतिकृतिसुखस्वङ्गतिगतो
गुरो बुद्ध स्वामिन् मम जनक मां पाहि भवतः ॥ २७ ॥

---

तेषां सिन्धुः सागरः तस्मिन् पतितः सन् । अन्यतः परसमयम् । बुद्धं विना शम्भ्वा-दीनामन्यत्र भक्तिं कर्तुमित्यर्थः । गन्तुं न क्षमः असमर्थः । अहमिति शेषः । यदि भूपाः राजानः । मिथ्यालब्धिका इति शेषः । दण्डयन्ति वा (त्वं कस्माद्बौद्धोऽसीति) दण्डनं कुर्व्वन्ति वा । विबुधाः पण्डिताः । विशेषबोधरहिता इत्यर्थः । निन्दन्ति वा गर्हन्ति वा । बान्धवाः ज्ञातयः । मुञ्चन्ति या मां कुलाद्बहिः कुर्व्वन्ति वा । पितः मम जनक जिन हे सर्व्वज्ञ अहं त्वां विना क्षणम् अपि न जीवामि जीवितुं नेच्छामी त्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

स्वर्ग इति । स्वर्गे देवलोके वा निरये नरके वा । तिर्य्यक्षु तिर्य्यग्जन्मसु वा । असुरे असुरकाये वा । अथवा प्रेतानां नगरे प्रेतानां निवासभूमिषु वा । नरपुरे मनुष्यलोके वा । अन्यतः क्वापि ब्रह्मलोकादिषु यत्र कर्हचित् । कर्म्मणा कुशला-कुशलादिकर्म्महेतुना । मम वसतिः निवासस्थानं अस्तु भवतु वा । भो सर्व्वज्ञ ततः ततः तेषु तेषु उत्पन्नोत्पन्नेषु जन्मसु । कर्णयोः श्रोत्रयोः अमृतस्यन्दिनः अमृत-प्रस्रवमानान् । निर्व्वाणसुखदातॄनिति भावः । निष्पापान् रागादिपापरहितान् । तव भवतः । गुणान् षट् असाधारणादीनि ज्ञानानि । मम मनः चित्तम् । अवलम्बताम् आश्रयताम् । अन्यसुखप्रार्थना (ब्रह्मादीनाम्) अपरा सुखकामना । मा भवत्वित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

तवेति । भवता गुणाःज्ञानदयादयः त एव पणाःमूल्यानि तैः गृहीतः आदत्तः । अहं तव एव दासः किङ्करः । अस्मि भवामि । भवता स्ववचनैः सूत्रादिधर्म्मैः विनीतः सुशिक्षितः । अहं तव एव शिष्यः छात्रः अस्मि । तत् भवतः गतिगतः

पिता माता भ्राता त्वमसि भगिनी त्वञ्च विपदि
स्थिरं मित्रं बन्धुः प्रभुरमृतदीक्षागुरुतमः ।
त्वमैश्वर्य्यं भोगो त्वमसि धनधान्यञ्च महिमा
यशो विद्या प्राणास्त्वमसि मम सर्व्वज्ञ सकलम् ॥ २८ ॥

विगतराग मुनीन्द्र दयाम्बुधे
सुगत भग्न दृढ़ङ्भवपञ्जर ।
अधिगतामृत बुद्ध मनोम्बुजं
मम तवानघ गन्धकुटीयताम् ॥ २९ ॥

---

आर्य्याष्टाङ्गिकमार्गमनुगतः । स्मृतिकृत्या कृतानुस्मरणेन जातं सुखं यस्य तथोक्तः । अहं तव एव पुत्रः खलुः । अस्मीति अन्वयः । मम गुरो आचार्य्य । मम जनक पितः । बुद्ध अधिगतधर्म्म । स्वामिन् हे प्रभो । त्वं भवतः संसारात् मां पाहि रक्ष इत्यर्थः । शिखरिणीवृत्तम् । तल्लक्षणं पूर्व्ववत् ॥ २७ ॥

पिता इति । सर्व्वज्ञ हे सर्व्वविद् त्वं भवान् मम पिता असि । माता असि । भ्राता असि । भगिनी असि । त्वं भवांश्च । विपदि विपत्तौ । स्थिरं दृढ़म् । मित्रं सहायः असि । बन्धुः ज्ञातिः असि । प्रभुः स्वामी असि । अमृतदीक्षा मोक्षोपदेशकः गुरुतमः परमाचार्य्यः असि । त्वं भगवान् । मम ऐश्वर्य्यम् असि । भोगः सुखम् असि । धनं मणि कनकादि धान्यं शालि गोधूमादिञ्च असि । महिमा अनुभावः असि । यशः कीर्त्तिः असि । विद्या शास्त्रम् असि । प्राणः जीवितम् असि । (प्रायः किं कथयामि) त्वं भवान् । मम सकलं सर्व्वम् असीति । शिखरिणीवृत्तम् ॥ २८ ॥

विगतराग इति । वितराग रागादिगत मुनीन्द्र मुनिश्रेष्ठ दयाम्बुधे करुणायाः सागर सुगतशोभनगमन भग्नं खण्डितं दृढ़ं महत् भवपञ्जरं संसार एव मन्दिरं येन तादृशः । अधिगतभवबुद्धम् अमृतं निर्व्वाणं येन तथोक्तः । बुद्ध सम्बुद्ध अनघ निष्पाप तवः भवतः मम मनोम्बुजं हृदयपद्मम् । गन्धकुटीयतां गन्धकुटिरिव भवतूत्यर्थः । द्रुतविलम्बितंवृत्तम् । तदुक्तं रत्नाकरे । द्रुतविलम्बितमाह नभौभराविति ॥ २९ ॥

अनात्मन्यनित्येऽशुभे दुःखदुःखे
दुरन्तेऽत्र संसारचक्रे भ्रमन्तम्।
त्वमेकोऽसि मां चातुमीशो दयाब्धे
प्रभोतः प्रसीद प्रसीद प्रसीद ॥ ३० ॥

प्रसीदेश देवेश लोकेश जिष्णो
जगद्वन्द्य मद्वन्द्य सद्वन्द्य बुद्ध।
अघोरे भवोरे स्मरारे तमोरे
तवैवास्मि भक्तो वपुर्वाङ्मनोभिः ॥ ३१ ॥

---

अनात्मनीति। अनात्मनि आत्मरहिते। अनित्ये नित्यरहिते। अशुभे शुभ-रहिते। दुःखदुःखे अतिशय-दुःखहेतु-भूते। दुरन्ते पर्य्यन्तरहिते। अत्र संसारचक्रे अस्मिन् भवचक्रे। भ्रमन्तं भ्रममाणम्। कर्म्म क्लेशवेगवशादिति शेषः। मां चातुं रक्षितुम्। एकः अद्वितीयः। त्वं ईशः प्रभुः असि। अतः अस्मात् हेतोः। दयाब्धे कृपासागर। प्रभो हे स्वामिन्। त्व प्रसीद प्रसन्नो भवेत्यर्थः। प्रसीद प्रसीदेति आम्रेडितम्। अर्थः पूर्व्ववत्। मयेति शेषः। भुजङ्गप्रयातं वृत्तम्। तदुक्तं रत्नाकरे। भुजङ्गप्रयातं भवेद्यैश्चतुर्भिरिति ॥ १० ॥

प्रसीदेति। ईश परार्थ करणे समर्थ देवेश इन्द्रादीनां देवानां नाथ सकल लोकेषु प्रधान जिष्णो जितमन्मथ जगद्वन्द्य लोकैर्व्वन्दनीय सद्वन्द्य मद्वन्द्य मया वन्दनीय सद्वन्द्य सुधीभिर्व्वन्दनीय बुद्ध हे सर्व्वज्ञ त्वं प्रसीद प्रसन्नो भव। अघोरे पाप शत्रु। पाप नाशक इत्यर्थः। भवोरे संसारोत्पत्ति नाशक स्मरारे कामशत्रु तमोरे मोहान्धकार विनाशकर। हे सर्व्वज्ञ इति यावत्। वपुर्व्वाङ्मनोभिः कायादिद्वारत्रयेण। तव एव भवतः एव। भक्तः अस्मि भक्तिमान् भवामि। अहमिति शेषः। भुजङ्ग-प्रयातं वृत्तम् ॥ ११ ॥

स तव कुलसुतः स एव भक्तः
स भवति शासनधुर्व्वहः स शिष्यः ।
स च शरणागतः स एव दासः
कथमपि यो न विलङ्घयेत्तवाज्ञाम् ॥ ३२ ॥

जगदुपकृतिरेव बुद्धपूजा
तदपकृतिस्तव लोकनाथ पीड़ा ।
जिन जगदपकृत् कथं न लज्जे
गदितुमहं तव पादपद्मभक्तः ॥ ३३ ॥

धन जन विभवासु देह राज्यं
यदुपकृते शतधा त्वया प्रदत्तम् ।
तमहितमपकर्त्तुरस्य लोकं
क्व मम कृपा मुदिता क्व वा क्व मैत्री ॥ ३४ ॥

---

स इति । यः नरः । कथम् अपि । तव आज्ञां शिक्षापद-प्रज्ञप्ति-सङ्घातं अनुशासनम् । न विलङ्घयेत् नातिक्रामेत् । सः नरः । तव कुलसुतः कुलपुत्रो भवति । सः एव भक्तः भक्तिमान् भवति । सः शासनधुर्व्वहः शासनधुरन्धरो भवति । सः शिष्यः छात्रो भवति । स च शरणागतः उपासको भवति । सः एव दासः किङ्करो भवति । अतः प्रभृति आ अष्टाशीत्याः पुष्पिताग्रवृत्तम् ॥ ३२ ॥

जगदिति । बुद्ध हे सम्बुद्ध जगतां लोकानां उपकृतिः हितकरणम् एव । तव पूजा अर्च्चनम् । भवतीति शेषः । लोकनाथ हे लोकश्रेष्ठ तदपकृतिः तेषां लोकानाम् अनिष्टोत्पादनम् । तव पीड़ा दुःखं भवति । जिन हे मारजित् जगतां लोकानां अपकृत् अनिष्टोत्पादकः । प्राणवधादि पापकारक इति भावः । अहं तव पादपद्म-भक्तः चरणकमलसेवायामतिरक्त इति गदितुं वक्तुम् । कथं न लज्जे ह्रीयुक्तो न भवामि । भवामीत्यर्थः ॥ ३३ ॥

धन इति । त्वया भवता यदुपकृते यस्मै लोकोपकाराय । धनानि मुक्ता-माणिक्यादयः । जनाः पुत्रकलत्रादयः । विभवाः गटहक्षेत्रादि सम्पत्तयः । असु जीवि-

उपपतिमसतीव चित्तवृत्ति
र्व्रजति भवन्तमपास्य पञ्चकामम् ।
अपि च विषयिणो न मोक्षसिद्धिः
किमु करवाणि मुनीन्द्र देहि दास्यम् ॥ ३५ ॥

प्रियतम पुरुषोत्तमाग्र बुद्ध
श्रमहर सिद्ध जगत्प्रसिद्धकीर्त्ते ।
भव शरणमनुत्तर प्रसादिन्
प्रतिपदमस्मि तवैव दासदासः ॥ ३६ ॥

---

तम् । देहं शरीरं राज्यञ्चेति एतत् सर्व्वम् । शतधा अनेकधा । प्रदत्तम् परित्यक्तम् । अहितं (येन केनिचत्कारणेन) वैरिणम् । तं लोकं सत्वसन्दूहम् । अपकर्तुः अनिष्टोत्पादकस्य अस्य मम । कृपा परदुःखापगम-वाञ्छा-लक्षणा करुणा क्व वा । मुदिता परसम्पत्ति प्रमोदलक्षणा-चित्तमृदुभावः क्व वा । मैत्री परहिताकार प्रवृत्तिलक्षणा सौहार्दता क्व कर्हचित् । गता इति शेषः ॥ ३४ ॥

उपपतिमिति । मुनीन्द्र हे मुनिश्रेष्ठ मम चित्तवृत्तिः मनःप्रवृत्तिः । उपपतिं जारं । अनुगच्छतीति शेषः । असती इव असाध्वी इव । नष्टपतीव्रता नारी इवेत्यर्थः । भवन्तं त्वां । अपहास्य त्यक्त्वा । पञ्चकामं रूपादिषु आलम्बणेषु । व्रजति याति । अपि च । विषयिणः पञ्चकामरसास्वादिनः यस्य कस्यचिदिति शेषः । मोक्षसिद्धिः निर्व्वाणाभिनिवेशम् । न नास्ति । ततः अहं किमु करवाणि । हे मुनीन्द्र त्वं मह्यं दास्यं दासभावं । उपासकत्वमित्यर्थः । देहि दानम् कुर्व्विति ॥ ३५ ॥

प्रियतम इति । प्रियतम अतिशयवल्लभ पुरुषोत्तमाग्र प्रत्येकबुद्धादिपरमपुरुषाणां श्रेष्ठ बुद्ध सम्बुद्ध श्रमहर संसारदुःखनाशक सिद्ध (रागादिक्लेशमलापगमात्) परिनिष्पन्न जगत्सु लोकेषु प्रसिद्धा प्रकटा कीर्त्तिः शीलसमाध्यादिर्यस्य तादृशस्य सम्बोधयति । हे सर्व्वज्ञ त्वं मम शरणम् भव प्रतिष्ठां कुरु । प्रसादिन् (क्लेशकालुष्यरहितत्वात्) प्रसादवत् (आत्मन उत्तमस्य कस्यचिदभावात्) हे अनुत्तर अहं प्रतिपदं पादं पादं प्रति । तव एव दासदासः अस्मि किङ्कराणां किङ्करो भवामि ॥ ३६ ॥

दशबल कलिकालदुर्ब्बलोऽहं
चिरदुरितार्णव-तुङ्गभङ्ग-मग्नः।
तव कथमनुयामि धर्म्मनावं
जिन मम देहि कृपाकरावलम्बम्॥ ३७॥

प्रणतिरियमनेकशस्तवाहं
बहुभवदुःखमवेक्ष्य भीतिभीतः।
धर गुरुतरतृष्णया पतन्तं
जिन मम देहि कृपाकरावलम्बम्॥ ३८॥

जगति तव कृपा हि निर्व्विशेषा
प्रभव तया जिन मां च दोषदुष्टम्।
अलमहमिह नो सुखी तयेन्दु-
र्न समकरश्चरतीह साध्वसाध्वे॥ ३९॥

---

दशबल इति। दशबलानि स्थानास्थानादि-ज्ञानानि। तैर्दशविधैर्ब्बलै समन्वित-त्वाद्भगवानपि दशबलः। तानि मया कृतायां अनुरुद्ध शतकटीकायां विस्तरतो द्रष्टव्यानि। हे दशबलधर कलिकाले पापबहुले अस्मिन् काले उत्पन्नत्वात् दुर्ब्बलः श्रद्धादिबल-रहितः। चिरं दीर्घकालं दुरितार्णवे रागादिदुश्चरितसागरे। तुङ्गैः महद्भिः भङ्गैः विपत्तरङ्गैः मग्नः पतितः अहं तव धर्म्मनावं नवलोकोत्तरधर्म्मनौकाम्। कथं अनुयामि प्राप्नोमि। जिन हे सर्व्वज्ञ भवतः कृपा करुणा एव करावलम्बः हस्तावलम्बकः तं मम देहि दानं कुर्व्वित्यर्थः॥ ३७॥

प्रणतिरिति। तव भवतः। अनेकशः अनेकधा। इयं प्रणतिः। ममेति शेषः। अहं बहु भवदुःखं अनेकसंसारदुःखम्। अवेक्ष्य विलोक्य। भीतिभीतः अतिशये-न भयप्राप्तः। गुरुतरया अतिमहत्या तृष्णया पतन्तं अधः कुर्व्वन्तम्। मामिति शेषः। धर धारणं कुरु। त्वमित्यन्वयः। जिन हे सर्व्वज्ञ मम कृपाकरावलम्बं करुणा-हस्ताव-लम्बकम्। देहि दानं कुर्व्विति॥ ३८॥

जगतीति। हे सम्बुद्ध तव कृपा करुणा। जगति लोके निर्व्विशेषा साधारणा। सर्व्वेषामिति शेषः। भवतीति अन्वयः। तया करुणाम्बुना। दोषदुष्टं रागादि-

उपचित-बहुमोह-जातमन्धं
विगतदयं विगतात्मबन्धुगन्धम् ।
अपगतगुणविद्यमुद्गताघं
जनमविवेकमवाशु दीनबन्धो ॥४०॥

अकरवमुरु दुष्कृतं पुरा य-
न्मम वपुसा वचसा च चेतसा च ।
अनुकलमखिलं प्रलीयतां तत्
तव चरणस्मरणेन सर्व्ववेदिन् ॥४१॥

---

दोषैर्दूषितं मां च । प्रपव परिगृह्य । अहं इह जन्मनि । तया करुणामात्रया । अलं अत्यर्थं । सुखी सुखितोऽस्मि । हि यस्मात् । इह जगति । इन्दुः चन्द्रः साध्वसाधौ सज्जन-दुर्जने । समकरः सदृशकिरणः सन् नो न चरति चरणं नो न करोति । करोतीत्यर्थः तद्वदिति भावः ॥ ३९ ॥

उपचित इति । उपचितं सञ्चितं बहु महत् मोहजातं अविद्यासमूहं येन तादृशम् । अन्धं तया अविद्ययैव अन्धभूतम् । ज्ञानचक्षुर्व्विरहितमित्यर्थः । विगतदयं करुणया अपगतम् । विगतः अपगतः आत्मनः स्वस्य बन्धूनां ज्ञातीनां गन्धः संबन्धो यस्मात् तथोक्तम् । स्वकीयज्ञातिभिर्व्विहीनमित्यर्थः । अपगता गुणाः करुणामैत्र्यादयो विद्या ज्ञानं यस्मात् तादृशम् । उद्गतानि उत्पन्नानि अघानि पापानि यस्य तथोक्तम् । अविवेकं कार्य्यचित्तविवेकरहितम् । जनं लोकम् । दीनबन्धो अशरणसत्वानां ज्ञाते हे सम्बुद्ध आशु शीघ्रम् । अव पालय । त्वमिति शेषः ॥ ४० ॥

अकरवमिति । पुरा पूर्व्वजन्मनि । मम वपुसा कायेन च । वचसा वचनेन च । चेतसा चित्तेन च । यत् उरु दुष्कृतं । (मातृबधादिकम्) महत् पापम् अकरवम् । तत् अखिलं सर्व्वं पापम् । सर्व्ववेदिन् हे सर्व्वज्ञ तव चरण-स्मरणेन श्रीपादानुस्मरणेन । अनुकलं क्षणे क्षणे । प्रलीयतां नश्यताम् ॥ ४१ ॥

सुगत तव पुरः पुरः पृथिव्यां
मधुरमते पतितोऽस्मि दण्डनत्या।
अकुशलमखिलं तवानुभावात्
प्रपततु नोत्पततात् पुनः सहैव ॥ ४२ ॥

तव चरणसरोजमेव वन्दे
तव पदपङ्कजमेव पूजयामि।
तव पदयुगमेव भावयेऽहं
तव पदमेव सदैव दैवतं मे ॥ ४३ ॥

कमपि न कथयामि नार्चयामि
कमपि न नौमि न चिन्तयामि नेहे।
कमपि न शरणं व्रजामि हित्वा
तव चरणं पितरस्मि किङ्करस्ते ॥ ४४ ॥

---

सुगत इति। मधुरा शोभना मतिः प्रज्ञा यस्य तथोक्तः। सम्बोधनः। सुन्दरमते सुगत हे सम्बुद्ध तव पुरः पुरः अग्रे अग्रे। दण्डनत्या दण्डप्रणामेन। दण्डवत् कायं प्रसार्य्य वन्दनेनेत्यर्थः। पृथिव्यां भूमौ। पतितः अस्मि। भूमौ निपतित्य वन्दामीत्यर्थः। तव अनुभावात् महिम्नः। अखिलं अकुशलं सकलपापम्। ममेति शेषः। प्रपततु (तेन प्रणिपातेन) व्यपगच्छतु। पुनः भूयः। सह एव उत्थितेनैव साकम्। नोत्पततात् वृद्धिं न गच्छतु ॥ ४२ ॥

तवेति। तव चरणसरोजं पादकमलम् एव। अहं वन्दे वन्दामि। तव पदपङ्कजं पादपद्मम् एव। पूजयामि पुष्पादिभिः अर्चयामि। तव पदयुगं पादद्वन्द्वम् एव। भावये भावयामि। चित्तेन मंलक्ष्यामीत्यर्थः। तव पदं श्रीपादद्वयम् एव। सदा सर्व्वस्मिन् काले एव। मे दैवतं देवता भवतीति ॥ ४३ ॥

कमिति। तव चरणं श्रीपादं। हित्वा त्यक्त्वा। कम अपि न कथयामि न वर्णयामि। कम् अपि न अर्चयामि पूजयामि। कम् अपि न नौमि स्तुतिं न करोमि। कम् अपि न चिन्तयामि। कम् अपि न ईहे न प्रार्थयामि। कम् अपि शरणं प्रतिष्ठां

सदसि सदसि वाचि वाचि सिद्धं
पथि पथि सद्मनि सद्मनीह बुद्धम्।
भुवि भुवि मम वारि वारि चेतः
कलयतु नित्यमिमं हि लोकनाथम् ॥४५॥

अविरतमवलोकयामि बुद्धं
गतरजसा मनसापि चक्षुषेव।
स्वपिमि निशि निधाय यद्धृदि त्वां
न मम समं विरहस्त्वयात एव ॥४६॥

मम तदिह दिनं हि दुर्दिनं स्या-
दसितघनस्थगितं न दुर्दिनं मे।
यदमृतसम-बुद्धरत्न-नाम-
स्मृतिरहितं दिनमस्य मा तदस्तु ॥४७॥

---

कृत्वा न भजामि न गच्छामि। पितः हे जनक ते भवतः। किङ्करः अस्मि दासो भवामि। अहमिति शेषः ॥ ४४ ॥

सदसीति। इह अस्मिन् जगति। सदसि सदसि सभायां सभायाम्। वाचि वाचि वचने वचने। पथि पथि मार्गे मार्गे। सद्मनि सद्मनि गृहे गृहे। भुवि भुवि भूमौ भूमौ। वारि वारि जले जले। सिद्धं परिनिष्पन्नं बुद्धं विज्ञातबोधम्। इमं लोकनाथं लोकश्रेष्ठं हि। मम चेतः चित्तम्। नित्यं दिवानिशम्। कलयतु चिन्तयतु ॥ ४५ ॥

अविरतमिति। गतानि अपगतानि रजांसि रागादीनि क्लेशानि यस्मात् तादृशेन। मनसा चित्तेन अपि। चक्षुषा इव नयनेन दर्शनमिव। बुद्धं सर्व्वविदम्। अविरतं निरन्तरम्। अवलोकयामि पश्यामि। यत् यस्मात्। निशि रात्रौ। त्वां भवन्तम्। हृदि मम चित्ते। निधाय प्रतिष्ठाप्य स्वपिमि शयनं करोमि। अतः एव। त्वया समं भवता सार्द्धम्। मम विरहः विनाभावः। न नास्ति ॥ ४६ ॥

ममेति। इह अस्मिन् जगति। असितैः कालैः घनैः मेघैः स्थगितम् आवृतम्। तिरोहितमित्यर्थः। दिनं दिवसं मे दुर्दिनं न स्यात् न भवेत्। अमृतेन पीयूषेण

अस्तु तद षड़भिज्ञ धर्म्मराजन्
त्रिभुवनवन्द्य मुनीन्द्र गौतमेति।
अहरहरनुकीर्त्यते नृभिर्यै-
रहमहितानपि तान् नमामि धन्यान् ॥४८॥

दशबल जिन सिद्ध वज्रबुद्धे
सुगत तथागत बुद्ध शाक्यसिंह।
इति निगदति यः क्वचित् कदाचित्
तमभिनमाम्यपि दासवंशजातम् ॥४९॥

मदनजितपराजितेड्य शास्तः
विभव विनायक विश्वविद् वरेण्य।
कविवर वदतां वरेश शुद्धो-
दनसुत शाक्यमुने मुने प्रसीद ॥५०॥

---

समस्य तुल्यस्य बुद्धरत्नस्य नामस्मृत्या नामानुस्मरणेन रहितं वर्ज्जितम्। यत् दिनम्। तत् मम दुर्दिनम् मेघाच्छन्नदिवसम्। भवतीत्यन्वयः। अस्य मम। तत् दुर्दिनं मा अस्तु न भवतूत्यर्थः ॥ ४७ ॥

अस्त्वतदेति। अस्तु तद षड़भिज्ञ धर्म्मराजन् त्रिभुवनवन्द्य मुनीन्द्र गौतम इति इत्थम्। यैः नृभिः मनुष्यैः। अहः अहः दिवसं दिवसं प्रति। अनुकीर्त्यते पुनः पुनः वर्ण्यते। धन्यान्। पुण्यवतः। तान् जनान् अहितान् अपि। द्वेषिणः अपि। ममेति शेषः। अहं नमामि नमस्कारं करोमि ॥ ४८ ॥

दशबलेति। दशबल जिन सिद्ध वज्रबुद्धे सुगत तथागत बुद्ध शाक्यसिंह इति यः जनः क्वचित् कुत्रचित् स्थाने। कदाचित् कस्मिन् काले अपि। इति इत्थम्। निगदति कथयति। बुद्धनामानुस्मरणेनेति यावत्। तं नरम्। दास-वंशजातं नीचकुले उत्पन्नम् अपि। अभिनमामि आदरेण नमस्कारं करोमि। अह-मिति शेषः ॥ ४९ ॥

मदनजिदिति। मदनजित् मारपराजित। अपराजित कैश्चिदपि वैरिमनुष्यैर्वा परा-जयं कर्तुमसमर्थ। ईड्य स्तुतिकर्तव्य। शास्तः अनुशासक। विभव अपगत-

अमृतमपि निपीय निर्जरेन्द्राः
पुनरपि तेऽपि शुनीस्तनं धयन्ति ।
सकृदपि तव वाक्सुधारसज्ञो
न विशति जातु स मातुरेव गर्भम् ॥ ५१ ॥

अहमिह भगवन्नलं न सोढुं
जननजरामरणामयादिबाधाम् ।
कुरु मम करुणां दिशो न जाने
गुरु तदवेक्ष्य च तिर्य्यगादिदुःखम् ॥ ५२ ॥

---

रक्षित । विनायक नायकैर्व्विरहित । विश्वविद् सर्व्वज्ञ । वरेण्य उत्तम । कविवर कविश्रेष्ठ । वदतां वर वादीनां श्रेष्ठ । ईश जगत्पते । शुद्धोदनसुत राज्ञः शुद्धोदनस्य पुत्र । शाक्यमुने शाक्यानां मुनिभूत । मुने हे सम्बुद्ध । प्रसीद त्वं प्रसन्नो भव । मयीति शेषः ॥ ५० ॥

अमृतमिति । निर्जरेन्द्राः इन्द्रोपेन्द्रादयो देवाः । अमृतं पीयूषम् अपि । निपीय पीत्वा । पुनः अपि पुनर्भवे अपि । ते अपि इन्द्रादयः अपि । शुनीस्तनं कुक्कुरयोषितः पयोधरम् । धयन्ति पिबन्ति । शुनीक्षीरं पिबन्तीति भावः । सकृत् एकवारम् अपि । तव वाक् सुधारसज्ञः वचनामृतरसवेदः (यः नरः भवति) सः नरः । जातु कदाचित् । मातुः अम्बायाः । गर्भं कुक्षिम् एव । मातृगर्भोत्पत्तिमिति भावः । न विशति न प्राप्नोति ॥ ५१ ॥

अहमिति । इह अस्मिन् संसारे । जननं जातिः जरा शैथिल्यापादकावस्था । मरणं निधनं आमयः रोगः आदिशब्दात् अन्योपद्रवाश्च तेषां बाधां पीड़ाम् । सोढुं सहितुम् । अहं न अलं न समर्थः । गुरु महत् । तत् जात्यादि दुःखं तीर्य्यगादिदुःखञ्च । अवेक्ष्य च विलोक्य (अस्माद् दुःखाद्बहिर्गन्तुम्) दिशो न जाने दिशः न जानामि । मार्गं न जानामीति भावः । भगवन् हे सर्व्वज्ञ त्वं मम करुणां कुरु ॥ ५२ ॥

तदुपरि परिचिन्त्य वृद्धकाले
करचरणादि-दृगादि-पारवश्यम्।
अगतिक मतिवेपते मनो मे
जिन किमहं करवै प्रभो प्रसीद ॥५३॥

श्रवणपथगतेष्वऽदृष्टपूर्व्वे
सुखकृतिवस्तुनि यत् तनोमि तृष्णाम्।
अविरतमत एव शान्ति बीजे
त्वयि वलते रमते * ममत्व-चेत: ॥५४॥

स विपदि रमते न मे मनोऽत:
सुरनरशर्म्मणि पूर्व्व-पूर्व्वभुक्ते।
अनुदिनमनुभूय शर्कराया-
मपि विरतिं कुरुते हि दृष्टदोष: ॥५५॥

---

तदिति। उपरि वृद्धकाले जीर्णावस्थायाम्। तेषां करचरणादीनां हस्तपादादीनाम्। दृगादीनां नयनादीनाञ्च पारवश्यम्। अवशवर्त्तिभावम्। परिचिन्त्य संकल्प्य। अगतिकं शमथविदर्शनादिप्रतिष्ठारहितम्। मे मन: चित्तम्। अतिवेपते अतिशयेन कम्पते। जिन हे सम्बुद्ध अहं किं करवै किं करवाणि। प्रभो हे नाथ त्वं प्रसीद प्रसन्नो भव। मयीति शेष: ॥ ५३ ॥

श्रवण इति। अदृष्टपूर्व्वे पुरा न दृष्टे। श्रवणपथगते श्रोतद्वारमापाथगते अपि। सुखकृति सुखसम्पादके वस्तुनि। यत् यस्मात्। तृष्णां तनोमि आलयं करोमि। अत: एव। शान्तिबीजे दु:खोपशमकारणे। त्वयि भवति। अविरतं दिवानिशम्। ममत्व-चेत: ममताचित्तम्। वलते एकतो भवति। रमते आलय करोति च ॥ ५४ ॥

स विपदीति। पूर्व्वपूर्व्वभुक्ते पूर्व्वपूर्व्वजन्मनि अनुभवकृते। सविपदि विपरिणाम-दु:खसहिते। सुरनरशर्म्मणि दिव्यमनुष्याणां सुखे। मे मन: मम चित्तम्। न रमते आलयं न करोति। अनुदिनं दिवसे दिवसे। अनुभूय: पुन: पुन: भूत्वा। शर्क-

---

* "ममत्वचेत:" क्वचित् ॥

करतलगतमप्यमूल्यचिन्ता-
मणिमवधीरयतीऽङ्गितेन मूर्खः ।
कथमहमपहाय बुद्धरत्नं
जगति धनी गुणवांश्च पण्डितश्च ॥ ५६ ॥

स भवति मतिमान् स ना कुलीनः
स च गुणवान् स च कीर्त्तिवान् स शूरः ।
स जगति महितः सुखी स एव
त्वयि जिन यस्य सुनिश्चलास्ति भक्तिः ॥ ५७ ॥

अपि सकलमधीतमत्र तेन
श्रुतमपि सर्व्वमनुष्ठितञ्च तेन ।
अपि जितमजितेन तेन विश्वं
त्वयि जिन यस्य सुनिश्चलास्ति भक्तिः ॥ ५८ ॥

---

रायाम् शर्करारसे अपि । दुष्टदोषः अजीर्णादि-सम्प्रेक्षित-रोगः नरः । अतः अस्मात् कारणात् विरतिं कुरुते हि । (तस्मिन् शर्करानुभवे) निरालयं करोति एव ॥ ५५ ॥

करतलगतमिति । मूर्खः अज्ञानः । करतलगतं हस्तप्राप्तम् । अमूल्यं मूल्यं कर्तुमसमर्थम् । अनर्घमिति यावत् । चिन्तामणिम् इष्टार्थदायकं मणिरत्नम् अपि । इङ्गितेन अभिप्रायव्यञ्जकदैहिकचेष्टया । अवधीरयति अवज्ञां करोति । तथा अहं बुद्धरत्नं चित्तीकृताद्यर्थेन रत्नसमं बुद्धम् । अपहाय त्यक्त्वा । जगति लोके । कथं धनी धनवांश्च गुणवांश्च पण्डितश्च भवेयमिति शेषः । न भवेयमित्यर्थः ॥ ५६ ॥

स इति । जिन हे सर्व्वज्ञ त्वयि यस्य नरस्य सुनिश्चला सुस्थिरा । दृढेति यावत् । भक्तिः अस्ति आदरः भवति । सः नरः मतिमान् पण्डितः भवति । सः ना पुरुषः भवति । सः कुलीनः कुलजः भवति । स च गुणवान् भवति । स च कीर्त्तिमान् यशस्वी भवति । स शूरः दक्षः भवति । सः जगति लोके । महितः पूजितः भवति । स एव सुखी सुखितः भवति ॥ ५७ ॥

अपीति । जिन हे सम्बुद्ध त्वयि यस्य नरस्य सुनिश्चला सुस्थिरा । भक्तिः अस्ति आदरः भवति । तेन नरेण अत्र अस्मिन् जगति । सकलं सर्व्वम् अपि । अधीतम्

त्यजति निजपरम्परादरेण-
तरसमयस्थजनो न दृष्टदृष्टिम्।
असुहरमपि गौरवेण मातु-
र्न खलु शिशुर्विषमोदकन्तु मुञ्चेत्॥५९॥

कविवरमहमस्मि पण्डितस्ते
जिन न जहामि कथन्नु दुर्गृहीतम्।
नुदति हि तमसन्ततिं प्रवृत्तां
मिहिर-मरीचि-सहायिनी सुदृष्टिः॥६०॥




---

अवगतम्। तेन सर्व्वं श्रोतव्यं निखिलम्। श्रुतम् आकर्णितम्। तेन सर्व्वं समस्तं कर्तव्यम्। अनुष्ठितं कृतञ्च। अपराजितेन पराजयमनापन्नेन तेन। विश्वम् अपि सकललोकञ्च। जितं जयग्रहणं कृतमित्यर्थः॥ ५८॥

त्यजतीति। इतरसमयस्थजनः वेदान्तवैष्णवादिषु अन्यसमयेषु कृतभक्तिः नरः। निजानां स्वकीयानाम्। पितृपितामहादीनामिति यावत्। परम्परायाः कुलक्रमप्राप्तेन आदरेण भक्त्या। दृष्टदृष्टिं गृहीतमिथ्यालब्धिम्। न त्यजति न हरति। (तथाहि) मातुः जनन्याः। गौरवेण अभ्युत्थानादिसम्मानेन। आदरेणेति यावत्। असुहरं प्राणहरम् अपि। विषमोदकं तु विषेण संसक्तं मोदकम् अपि। अत्र मोदकं खाद्य-विशेषम्। शिशुः अर्भकः। न मुञ्चेत् खलु न हरत्येव॥ ५९॥

कविवरमिति। जिन हे सर्व्वज्ञ अहं ते भवतः। (गुणकथनात्) कविवरम् अस्मि श्रेष्ठकविर्भवामि। (अहं भवतः धर्म्मपरिज्ञानात्) पण्डितश्च अस्मि। (तादृशः अहं) दुर्गृहीतं मम अविज्ञतया गृहीतं मिथ्याज्ञानम्। कथन्नु न जहामि न परित्यजामि। जहाम्येवेत्यर्थः। कथम्? मिहिरमरिचिं सूर्य्यकिरणम् सहायिनी विश्वासभावोपगता। सूर्य्यरश्मि सम्पर्केनेत्यर्थः। सुदृष्टिः अविनष्ट नेत्रकान्तिः। प्रवृत्तां रात्रौ सम्भूताम्। तमसन्ततिम् अन्धकारसमूहम्। नुदति हि क्षिपतीवेत्यर्थः॥ ६०॥

सुगतपदपराङ्मुखस्य पुंसः
किमु तपसा यशसा च किं किमन्यैः ।
सुगतपदपराङ्मुखस्य पुंसः
किमु तपसा यशसा च किं किमन्यैः ॥ ६१ ॥

सुगतपदि न भक्तिरस्ति येषा-
मजननिरेव महीतलेऽस्तु तेषाम् ।
कथितमिह कृतागसां नराणां
निरयगतिर्नियतं न चान्यतो वा ॥ ६२ ॥

विदित-सकलशास्त्रमुन्नतानां
कुलभवमुत्तमरूप यौवनाद्यम् ।
जिन भवदनुपासकं नृपाणां
त्यजतु मनो मम नीचवत्तु जात्या ॥ ६३ ॥

---

सुगत इति । सुगतपदस्य सर्व्वज्ञचरणस्य पराङ्मुखस्य विमुखस्य । पुंसः पुरुषस्य । तपसा किमु किं प्रयोजनम् । यशसा च कीर्त्त्या च परिवारसम्पत्त्या च किम् । अन्यैः धनधान्यादिभिः अपरैः किम् प्रयोजनम् । सुगतपदस्य सर्व्वज्ञपादस्य । अपराङ्-मुखस्य सम्मुखस्य । शेषं पूर्व्ववत् ज्ञेयम् । (भगवति गौतमे चित्तप्रसादादेव स्वर्गा-पवर्गादि सर्व्वं सेत्स्यतीति भावः) ॥ ६१ ॥

सुगतपदीति । येषां सत्वानाम् । सुगतपदि सम्बुद्धपादे । भक्तिः आदरः । न नास्ति । महीतले पृथिव्याम् । मनुष्यलोकेति यावत् । तेषां नराणाम् । अजननिः अनुत्पाद एव । अस्तु भवतु । (कस्मात्) (यतः) इह अस्मिन् जगति । कृतानि आगांसि मातृबधादिपापानि यैस्तादृशाम् । पापकारीणामित्यर्थः । नराणां मनुष्याणाम् । निरयगतिः नरकेषु पतनम् । नियतं निश्चितम् । अन्यतः तिर्य्यगादिषु अन्यभवेषु समुत्पन्ने (अनन्तर्य्यकर्म्मवशान्नरकोत्पत्तिम) न च स्यात् न च प्राप्नुयादिति । कथितम् उक्तम् । सम्बुद्धेनेति शेषः । (तत इत्यनुसन्धेयम्) ॥ ६२ ॥

विदित इति । जिन हे सर्व्वज्ञ विदितानि ज्ञातानि सकलशास्त्राणि व्याकरणा-लङ्कारादि समस्तशास्त्राणि यैस्तथोक्तानाम् । उन्नतानां तुङ्गानां क्षत्रीयब्राह्मणादीनाम् ।

परिहृत-मदमान-मत्सरादि
सकरुणशील समाधिमान् विवेकी।
तव पददृढभक्ति *रन्त्यजोऽपि
प्रतिभवमस्तु नरोत्तमः सखा मे ॥ ६४ ॥

विहितजिनपदार्च्चनस्य भक्तु
र्दशदिवसानपि जीवितं प्रशस्तम्।
न तु नियुतसहस्रकल्पकोटि-
रकृतमुनीन्द्र पदाब्जपूजनस्य ॥ ६५ ॥

---

कुल भवं कुले जातम्। उत्तमरूपयौवनाद्यम् उत्तमरूपेन च यौवनेन च आदिना शेषसम्पत्त्या च समन्वागतम्। भवदनुपासकं भवत उपासकभावमनापन्नम्। स्पाशं कुत्सितमनुष्यम्। मम मनः जात्या उत्पन्ना। नीचवत् तु चण्डालमिव। त्यजतु अपहरतूत्यर्थः ॥ ६३ ॥

परिहृत इति। परिहृताः अपगताः मदाः जात्यादिचतुर्व्विंशन्मदाः मानाः चित्तोन्नतयः मत्सराः परसम्पत्त्यसहनाः आदयः शेषपापधर्म्माः यस्य सः। तथा सकरुणः दयान्वितः शीलसमाधिमान् शीलसमाधियुक्तः। विवेकी कायचित्तोपधिभिस्त्रिभिर्व्विवेकवान्। तव पददृढभक्तिः पादयोः अतिशयादरः। नरोत्तमः उत्तमपुरुषः। अन्त्यजः नीचकुले जातः अपि। प्रति भवं भवे भवे। मे सखा अस्तु मम सहायो भवतु ॥ ६४ ॥

विहित इति। विहितं कृतं जिनस्य सर्व्वज्ञस्य पदार्च्चनं पदयोः पूजा येन तादृशस्य। भक्तुः भक्तिमतः। उपासकस्येति भावः। दशनिवसान् दशाहान्यपि। जीवितं प्राणधारणम्। प्रशस्तं प्रशंसनीयम्। बुद्धेनेति शेषः। अकृतं मुनीन्द्रस्य सम्बुद्धस्य पदाब्जपूजनं पादपद्मयोः अर्च्चनं येन तादृशस्य नरस्य। नियुतसहस्रकल्पकोटिः कल्पानां कोटिलक्षसहस्राणि। (प्राणधारणम् न तु न प्रशस्तमित्यर्थः ॥ ६५ ॥

---

* "रन्यजो" क्वचित् ॥

स भवति सुरसुन्दरी सखोऽन्यैः
कृतमभिनन्दति वार्चनञ्च भक्त्या ।
त्रिदशनरगुरो त्वदीयपूजा
मगतितया यदि कर्तुमक्षमःस्यात् ॥ ६६ ॥



सुरुचिरमतिचित्र-चित्ररूपं
नयनपथं नयतीह यस्तवऽर्च्यम् ।
रमयति पुरुषं तमप्युदारं
चिरतरसञ्चित-दुष्कृतं कवीन्द्र ॥ ६७ ॥

मणिकनकशिलादि निर्म्मिताया:
प्रणमति ते प्रतिमां तयोश्च तुल्यम् ।
फलमिह मनसः समप्रसादा
दनुपरतं जिन योऽग्रतो नमेत् त्वाम् ॥ ६८ ॥

---

स इति । त्रिदशाः देवा नराःमनुष्याः तेषां गुरो आचार्य्य हे सम्बुद्ध (यः नरः) अगति तया दारिद्रतया । त्वदीयपूजां भवतः अर्च्चनम् । कर्तुं यदि अक्षमःस्यात् असमर्थो भवेत् । सः नरः । भवतः अन्यैः अपरैः नरै कृतं अर्च्चनं पूजां च । भक्त्या आदरेण । अभिनन्दति अनुमोदते वा । (सः नरः) सुरसुन्दरीणां दिव्ययोषितां सखः सहायो यस्य तादृशः दिव्यप्सराभिः परिवृतो देवराजा भवतीत्यर्थः ॥ ६६ ॥

सुरुचिरमिति । हे कवीन्द्र इह अस्मिन् जगति । तव अर्च्चं पूज्यम् । सुरुचिरम् अति मनोज्ञम् । द्वात्रिंशद्वरमहापुरुषलक्षणैः समलङ्कृतमिति भावः । अतिचित्रम् अतिशयेन विचित्रम् । अशीत्यनुव्यञ्जनैः समन्वागतमित्यर्थः । तानि महापुरुषलक्षणानि अशीत्यनुव्यञ्जनानि च मत्कृते सद्धर्म्ममकरन्दे विस्तरतो दर्शितानि । चित्ररूपं वस्त्रादिषु चित्रकारैः कृतं रूपसंस्थानम् । यः नरः नयनपथं नेत्रसम्मुखीभावम् । नयति आलम्बनवशात् प्रापयति । उदारं महान्तम् । तं पुरुषम् अपि । चिरतरम् अतिदीर्घकालम् । सञ्चितम् उपचितं दुष्कृतं पापम् । रहयति (तदङ्ग प्रहानवशात्) त्यजतीत्यर्थः ॥ ६७ ॥

मणि इति । जिन हे सम्बुद्ध मणिः प्रसिद्धः कनकं सुवर्णं शिला प्रस्तरम् इत्यादिभिर्निर्म्मितां कृताम् । ते भवतः प्रतिमा प्रतिबिम्बम् । यः नरः प्रणमति नमस्कारं

सकृदपि तव पादपद्मपूजां
वनकुसुमैरपि यः करोति धीमान्।
अवनतसुरसङ्घ मौलिमालो-
ज्ज्वलममलं श्रयते तमाधिपत्यम् ॥ ६९ ॥

यदि भवति सरूपमेकचित्त-
क्षण-शरणोद्भव-पुण्यवृन्दमुच्चैः
गणशरण समन्तभद्र साधो
ऽखिलनभसोऽप्यतिरिच्यते तदा तत् ॥ ७० ॥

तव गुणकथने तु यः प्रसन्नः
तमनुविशन्ति मुने गुणास्त्वदीयाः।
उदयति शशिनि प्रसन्नमिन्दू-
पलमिव तत किरणावली तुषारः ॥ ७१ ॥

---

करोति। अनुपरतं जीवन्तं त्वाम्। अग्रतः सम्मुखे। (यः नरः) नमेत् नमस्कारं कुर्य्यात्। मनसः समप्रसादात् तयोः नरयोः। फलं कुशलविपाकम्। तुल्यं समानं भवतीत्यर्थः ॥ ६८ ॥

सकृदिति। यः धीमान् पण्डितः। वनकुसुमैः वनजपुष्पैरपि। तव पादपद्मपूजा चरणकमलार्चनम्। सकृत एकवारम् अपि करोति अतिशयभक्त्या कुर्य्यादित्यर्थः। अवनतानां प्रणतानां सुरसङ्घानां देवसमूहानाम् मौलिः किरीटमेव माला पुष्पमाला। ताभिरुज्ज्वलं दीप्तम्। अमलं निर्म्मलम्। आधिपत्यम् अधिपतिभावम्। इन्द्रत्व-मित्यर्थः। तं नरम्। श्रयते आश्रयं करोतीत्यर्थः ॥ ६९ ॥

यदीति। गणाः आर्य्यपुद्गलसमूहाः तेषां शरण प्रतिष्ठाभूत साधो मैत्रीसमोपशमादिगुणैः समन्वित समन्तभद्र हे सर्व्वज्ञ एकचित्तक्षणं क्षणः निमेषक्रियाचतुर्थभागः कालः तस्मिन् एकचित्त प्रवर्त्तनकाले। शरणोद्भवेन शरणगमनेन सञ्जातम्। उच्चैः उन्नतं महत् वा। पुण्यवृन्दं कुशलसमूहम्। यदि सरूपं भवति रूपसहितं भवेत्। तदा तत् कुशल-समूहम् अखिलनभसः सकलाकाशात् अपि। अतिरिच्यते अधिकं भवतीत्यर्थः ॥ ७० ॥

तवेति। मुने हे सर्व्वज्ञ तव गुणकथने गुणवर्णनानिमित्तेन। यः नरस्तु प्रसन्नः। त्वदीयाः भवतः। गुणाः मैत्रीकरुणादयः। तं नरम्। अनुविशन्ति प्राप्नुवन्ति। कथम्

सकृदपि समदायि देव किञ्चि-
द्भवरतिमुत्सृजता जनेन तुभ्यम् ।
सुगत तदखिलान् लुनाति धारा
वदसिरिव द्रुममाश्रवादिदोषान् ॥ ७२ ॥

कृतमिह सुकृतं मृषादृशा य-
ज्जनयति तत् किल तस्य दुर्व्विपाकम् ।
क्षिति सलिलरसं स्वतिक्तभावं
नयति यथा पिचुमन्दवीजमुप्तम् ॥ ७३ ॥

तव पदनलिने निपत्य भूमौ
निपतति नैव चतुर्ष्वपायकेषु ।
न हि कुशलकरो नरः कदाचित्
क्वचिदपि दुर्गतिमेति नाथ कश्चित् ॥ ७४ ॥

---

शशिनि चन्द्रे । उदयति उदयं गच्छति । प्रसन्नम् इन्दूपलं चन्द्रकान्तिपाषाणम् । तत् किरणावल्याः चन्द्ररश्मिसमूहस्य तुषारः इव शिशिरगुण इवेत्यर्थः ॥ ७१ ॥

सकृदिति । देव विशुद्धि देव हे सुगत भवरतिं त्रिषु भवेषु आलयम् । उत्-सृजता परित्यजता जनेन । तुभ्यं किञ्चित् अत्यल्पं वस्तु । सकृत् एकवारम् अपि । समदायि सम्यग् दीयते । तत् दानजातं कुशलचित्तम् । धारावत् सुनिशितः असिः खड्गः । द्रुमम् इव वृक्षम् इव । अखिलान् आश्रवादि दोषान् कामाश्रवादि पापानि । लुनाति छिनत्ति । अर्हन्मार्गज्ञानासिना छेदं करोतीत्यर्थः ॥७२ ॥

कृतमिति । इह अस्मिन् जगति मृषादृशा मिथ्यादर्शनात् । यत् सुकृतं कुशलम् । कृतं सञ्चितम् । तत् कुशलम् । तस्य नरस्य । दुर्व्विपाकम् अनिष्टफलम् । जनयति उत्पादयति । (किमिव) उप्तं भूमौ रोपितम् । पिचुमन्दः निम्बवृक्षः तस्य वीजम् । क्षितिसलिलरसं पृथिव्यामापःरसम् । स्वतिक्तभावं स्वकीयतिक्तरसमेव । यथा जनयति करोति । तथैवेति शेषः ॥ ७३ ॥

तवेरि । तव पदनलिने पादपद्मसमीपे । अयं सामीप्याधारः । निपत्य भूयः पुनः चतुर्षु अपायकेषु तिर्य्यगादिषु चतुर्षु नरकेषु । नैव पतति पतनं न भवत्येव ।

इति भवदुपदेशतो विदित्वा
तव पदपङ्कजपूजने रतोऽस्मि।
दृढयतु भगवन् युगे युगे मे
कुमतिमुदस्य भवे भवेऽर्य्यभक्तिम् ॥ ७५ ॥

स्थिरमपि भगवन् चणं तवोक्तौ
करचरणादिदृगादिवैरिवर्गः।
व्यथयति हृदयं बलाद्विचाल्य
त्वमिदमनाथमनीश पाहि पाहि ॥ ७६ ॥

यदि नयनमयं वशे विधातुं
यतति तदा द्रवति श्रवो यदा तत्।
तदनु रसननासिकाशरीरा-
ण्यहह परस्परदुर्ग्रहाणि चैवम् ॥ ७७ ॥

---

हि निश्चितम्। नाथ हे प्रभो कुशलकरः [ स्वन् नरः। कश्चिदपि कदाचिदपि। दुर्गतिं नरकम्। न एति न प्राप्नोति ॥ ७४ ॥

इतीति। इति इत्थम्। भवदुपदेशतः। भवतः धर्म्मोपदेशात्। विदित्वा ज्ञात्वा। तव पदपङ्कजपूजने पादकमलपूजायाम्। रतः अस्मि सक्तो भवामि। हे भगवन् युगे युगे युगं युगं प्रति। भवे भवे भवं भवं प्रति। अस्य मे ईदृशस्य मम। कुमतिमुत् दुर्लब्धिनाशिका। आर्य्यभक्तिं त्रिविधरत्नेषु आदरम्। दृढयतु स्थिरं करोत्वित्यर्थः ॥ ७५ ॥

स्थिरमिति। हे भगवन्। तव उक्तौ अनित्यादिप्रतिसंयुक्ते वचसि। चणं स्थिरं निश्चलमपि। अनाथं समाधिप्रज्ञादिप्रतिष्ठारहितम्। इदं मदीयम्। हृदयं चित्तम्। करचरणादयः हस्तपादादयः दृगादयः नेत्रादयः तेषां वैरिवर्गः शत्रुसमूहः। बलात् सहसा। विचाल्य चलनं कृत्वा। व्यथयति पीडयति। अनीश हे विनायक त्वं पाहि पाहि पालय पालयेत्यर्थः। मामिति शेषः ॥ ७६ ॥

यदीति। अयं जनः। नयनं नेत्रम्। वशे स्वविषये। विधातुं कर्तुम्। यदि यतति यत्नं करोति। तदा श्रवः श्रोत्रम्। द्रवति गच्छति। शब्दालम्बनमिति शेषः।

गतिरतिचपलस्य चेतसः स्या-
दिह नभसीव नभस्वतोऽसुरोधा।
कथमपि भजते क्रमेण धैर्य्यं
चिरमिदमभ्यसनेन सद्विरक्त्या ॥ ७८ ॥

विशदमपि मनः स्वभावतो मे
चिरकृतकिल्बिषकालिमावृतं मे।
कुशलजललवैः कथन्नु धौतं
भवति मयेदृशचेतसार्ज्जितैस्तैः ॥ ७९ ॥

---

यदा तत् श्रोत्रम्। (वशे त्रिधातुं यततीत्यन्वयः) तदनु अनन्तरम्। रसनं जिह्वे-न्द्रियम् नासिका घ्राणेन्द्रियम् शरीरं कायेन्द्रियमिति एतानि इन्द्रियाणि एवम् परस्परैः अन्योन्यैः। दुर्धर्षाणि दुर्व्वाराणि भवन्तीति शेषः। अहह खेदसूचकमित्यर्थः ॥ ७७ ॥

गतिरिति। इह अस्मिन् स्कन्धपञ्चके। शरीरे इति यावत्। अतिचपलस्य अति-चञ्चलस्य। चेतसः मनसः। गतिः प्रवृत्तिः। नभसि आकाशे। नभस्वतः मारुतस्य। गतिरिवेति अन्वयः। असुरोधा स्यात् सुखेन निरोधो न भवेत्। इदम् अतिचपलं चित्तम्। सद्विरक्त्या शोभनचित्तविमुक्त्या च। वैराग्येणेत्यर्थः। चिरं दीर्घकालम्। अभ्यसनेन ध्यानादेरभ्यासेन च। चित्तप्रज्ञयोः पौनःपुन्येन तदावृत्त्या इति भावः। क्रमेण मार्गपरिपाट्या च। कथं धैर्य्यं धीरभावम्। भजते आश्रयति। प्राप्नो-तीत्यर्थः ॥ ७८ ॥

विशदमिति। स्वभावतः प्रकृत्या। विशदं विमलम्। प्रभास्वरमित्यर्थः। मे मनः मम चित्तम्। चिरकृतानि पूर्व्वसञ्चितानि किल्बिषाणि पापानि तेषाम् कालिमा मालिन्यभावेन आवृतं स्यात् आच्छादितं भवेत्। मया ईदृशचेतसा ईदृशेन अविद्या-सहगतेन चित्तेन। अर्ज्जितैः सञ्चितैः। तैः कुशलजललवैः कामावचरकुशलजल-बिन्दुभिः। कथन्नु केन विधिना। धौतं भवति परिशुद्धं भवति। कामावचरकुशल-मात्रेण परिशोद्धुं न शक्यते इति भावः ॥ ७९ ॥

शुचितरवचनामृतप्रवाहै-
रघमलिनीकृतचित्तसन्ततिं माम् ।
अनधिवर नितान्तमाधितप्तं
सपदि विशोधय दण्डवन्नमामि ॥ ८० ॥

सति सकलगुरो मुने प्रसन्ने
किमिह दुरापममुत्र किं दुरापम् ।
यदमलमनसस्त्वदीयदासाः
सुरपतितां मनसापि नाद्रियन्ते ॥ ८१ ॥

विदधति भयमिन्द्रियाणि भूत्वा
विषयविषग्रहणेषु* दोषदुष्टात् ।
न हि सुविदितभाविदाहदोषः
शिशुरपि दीपशिखाग्रसङ्गही स्यात् ॥ ८२ ॥

---

शुचीति । अनधिवर हे सर्व्वज्ञ शुचितरैः अतिपरिशुद्धैः । वचनं केवलभाषितम् । तदेव अमृतम् अमृतरसः । तस्य प्रवाहाः जलधाराः तैः । अघैः रागादि पापैः मलिनीकृता क्लिष्टतामापादिता चित्तसन्ततिः चित्तपरम्परा यस्य तादृशम् । नितान्तम् अत्यर्थम् । आधितप्तं मनःपीड़या युक्तम् । माम् सपदि तत्क्षणे । विशोधय परिशुद्धं कुरु । त्वमिति शेषः । दण्डवन्नमामि दण्डनमस्कारं करोमीत्यर्थः ॥ ८० ॥

सतीति । यत् यस्मात् । अमलमनसः निर्म्मलचित्ताः । विदर्शनाभावनादियुक्तचित्ता इतिभावः । त्वदीयदासाः भवतः किङ्कराः । योगिन इत्यर्थः । सुरपतिताम् इन्द्रत्वम् । मनसा चित्तेनापि । नाद्रियन्ते आदरं न कुर्व्वन्ति । ततः सकलगुरो समस्तसत्वानामाचार्य्य ? मुने हे सर्व्वज्ञ । प्रसन्ने सति प्रसादं कुर्व्वति । त्वयीति शेषः । इह अस्मिन् जगति । दुरापं दुष्प्रापं किम् ? अमुत्र परलोके । दुरापं दुरागमं किम् ? ममेति शेषः ॥ ८१ ।

विदधतीति । दोषदुष्टात् रागादिदोषैर्म्मलिनभावात् । विषयविषाणां रूपशब्दादिगोचरविषाणाम् । ग्रहणेषु आलम्बनकरणेषु । ज्ञानमोहत्वेनेति शेषः ।

---

* "दोषदुष्टा" इति क्वचित् पाठः ॥

न भवति जिन यावदेष जीर्णो
विषयपिशाचनिषेवनेन तावत् ।
झटिति सुकृतकर्म्मणि प्रयोज्य
अव शरणागतवत्सलागतिं माम् ॥ ८३ ॥

इदमपि यदि वेद्मि पुत्रदार-
स्वतनुगृहादि मरीचिकाम्बुतुल्यम् ।
स्थगयति ममता च मामहन्ता
तदपि हि मोहविजृम्भितं गरीयः ॥ ८४ ॥

---

इन्द्रियाणि नयनादिपञ्चेन्द्रियाणि । भूम्ना भूयः । भयं विदधति भीतिं कुर्व्वन्ति । हि निश्चितम् । सुविदितः सुविज्ञातः भावी एष्यत्कालवर्त्ती दाहदोषः गात्रादिसन्ताप-दोषः येन तादृशः शिशुः बालकोऽपि । दीपशिखा प्रदीपज्वाला । तस्याः अर्थंतस्य सङ्ग्रही ग्रहणशीलः । स्यात् न भवेदित्यर्थः ॥ ८२ ॥

नेति । शरणागतेषु उपासकेषु वत्सल स्नेहयुक्त हे जिन एषः जनः । विषयः रूपशब्दादि पञ्चकाम एव पिशाचः पिशितभक्षकः रक्ष इति यावत् । तस्य निषेवनेन नित्यसेवनेन । यावत् जीर्णो न भवति जरायुक्तो न स्यात् । तावत् अगतिम् अनाथं माम् । झटिति शीघ्रम् । सुकृतकर्म्मणि कुशलक्रियायाम् । प्रयोज्य संयोज्य । अव सम्यक् पालये-त्यर्थः ॥ ८३ ॥

इदमिति । इदं एतत् पुत्रः तनयः दारा भार्य्या स्वतनु स्वकीयशरीरम् गृहं गेहम् आदिना अवशेषं स्वर्णरजतादि च । मरीचिकाम्बुना मरीचिजलेन तुल्यं सदृशम् । भवतीति शेषः । यद्यपि वेद्मि जानामि । तदपि ममता च ममेति बुद्धिश्च । अहन्ता च अहमितिबुद्धिश्च । माम् । मम प्रज्ञामिति भावः । स्थगयति छादयति । हि निश्चितम् । मोहविजृम्भितम् अविद्यायाः प्रलम्भणम् । गरीयः अतिगुरु । अति-महदित्यर्थः ॥ ८४ ॥

अजनि च निजकारणेन सर्व्वं
निवसति जीर्य्यति नश्यति स्वहेतोः।
अहमपि हि तथैव धातुपुञ्जः
कथमहमस्य कथं मुने ममेदम् ॥ ८५ ॥

आत्मबुद्धिरिह यस्य जायते
सा च तस्य जनयेदहङ्कृतिम्।
सा तनोति सुतरां भवस्पृहां
सैव मोहजननी मुहुर्मुहुः ॥ ८६ ॥

तेन कर्म्म कुरुते शुभाशुभं
तद्धि दुःखजनकं भवत्रये।
दुःखमूलमतएव सात्मधी
स्तां लुनाहि जिन मे वचोसिना ॥ ८७ ॥

---

अजनीति। हे मुने सर्व्वं पुत्रकलत्रादि सकलं धातुपुञ्जम्। निजकारणेन स्वकीय कर्म्मादिप्रत्ययेन। अजनि उत्पादि च। स्वहेतोः स्वकीयकर्म्मप्रत्ययात्। निवसति प्रवर्त्तते च। जीर्य्यति जरां प्राप्नोति च। नश्यति क्षणभङ्गुरत्वात् नाशं याति च। हि यस्मात्। अहमपि तथैव धातुपुञ्जः निरात्मकः धातुसमूहः। ततः अस्य पुत्र-कलत्रादिधातुसमूहस्य। अहं कथं सम्बन्धी भवेयमिति शेषः। मम इदं पुत्रकलत्रादि धातुपुञ्जम् कथं वा सम्बद्धं भवेत्। न भवेदित्यर्थः ॥ ८५ ॥

आत्मेति। यस्य जनस्य। इह रूपादिस्कन्धपञ्चके। आत्मबुद्धिः आत्मेति दृष्टिः। जायते उत्पद्यते। सा च आत्मदृष्टिः। तस्य जनस्य। अहङ्कृतिम् अहङ्का-रम्। जनयेत् उत्पादयेत्। सा अहङ्कृतिः। सुतराम् अत्यर्थम् भवस्पृहां भवालयम् भवतृष्णामिति यावत्। तनोति करोति। सैव भवतृष्णा। मुहुर्मुहुः क्षणं क्षणं मोह-जननी मोहमुत्पादयतीत्यर्थः। रथोद्धता नाम वृत्तम्। तदुक्तं रत्नाकरे। रान्नराविह रथोद्धतालगाविति ॥ ८६ ॥

तेनेति। तेन मोहेन। शुभाशुभं कुशलाकुशलम् कर्म्म कुरुते। तत् हि कुशला-कुशलं कर्म्म। भवत्रये कामादिषु त्रिषु भवेषु। दुःखजनकं जात्यादिदुःखमुत्पादयति।

अथ सकलविदं दयासमुद्रं
त्रिभुवनकारणकारणं कुलीनम्।
निखिलगतमनन्तमस्तिशान्तिं
मुनिजनमानसहंसमीशमीडे॥८८॥

स्नाने कर्म्मणि भोजने वितरणे घ्राणे तथाकर्णने
ध्यानस्पर्शनदर्शनादिषु तथा सम्भाषणादावपि।
प्रातः सायमथो दिवा च निशि च त्वत्पादपद्मे प्रभो
चित्तं मे रमतां मुनीन्द्र सततं यूनां युवत्यामिव॥८९॥

---

अत एव सा आत्मधीः आत्मदृष्टिः। दुःखमूलं भवदुःखस्य कारणम्। भवतीति अन्वयः। मे मम ताम् आत्मदृष्टिम्। जिन हे सम्बुद्ध वचोऽसिना प्रवचनखड्गेन। भवत इति शेषः। लुनाहि छेदनं कुर्व्वित्यर्थः। रथोद्धतावृत्तम्॥८७॥

अथेति। अथ अनन्तरम्। सकलविदं सर्व्वज्ञम्। दयासमुद्रं करुणाजलनिधिम्। त्रिभुवनकारणं त्रिषु भुवनेषु उत्पत्तेः हेतुभूतम्। तृष्णेति यावत्। तस्य कारणं मूलघातवशात् नाशकम्। निखिलगतं सकललोकेषु व्याप्तम्। अनन्तम् अन्तरहितम्। गुणानामिति शेषः। अस्तिशान्तिम् उपशान्तक्लेशवन्तम्। मुनिजनानाम् अष्टार्य्यपुद्गलसङ्घानाम्। मानसमेव सरः तस्मिन् हंसः प्रसिद्धः तमिव। ईशं स्वामिनम्। ईडे स्तुतिं करोमि। अहमिति शेषः। वृत्तं पूर्व्वं कथितम्॥८८॥

स्नाने इति। स्नाने शोधनक्रियायाञ्च। भोजने आहारसेवने च। वितरणे दाने च। घ्राणे चुम्बने च। तथा आकर्णने श्रवणे च। ध्यानं धर्म्मालम्बनस्य मनसिकरणम्। स्पर्शनं काष्ठादीनां घर्षणम्। दर्शनं रूपालम्बनग्रहणम्। आदिना शेषक्रियातेषु च। तथा सम्भाषणादावपि। परस्परकथनादौ च। प्रातः प्रभातकाले च। सायं सन्ध्याकाले च। अथो दिवा दिवसे च। निशि रात्रौ च। प्रभो स्वामिन् मुनीन्द्र हे सर्व्वज्ञ त्वत्पादपद्मे भवतः चरणकमले। मे चित्तं मम मनः। युवत्यां तरुण्याम् यूनां तरुणानाम्। चित्तमिव। सततं निरन्तरम्। रमताम् आलयं करोतु। अत्र यूनां युवत्यामिवेति उपमायाः अशोभनता गम्यते। सा तु कविकृता वा कालान्तरलिपिवशात् सम्भूतावेति वक्तुं न शक्यते। अपि तु बहुषु पुस्तकेषु दर्शनाभयापि तथैव स्वीकृता। शार्दूलविक्रीडितं वृत्तम्॥८९॥

मत्स्वामिन् मदभीष्टकल्पविटपिन् मद्देवते मद्गुरो
मन्मातर्मदुपास्य मत्प्रियसखे मत्सद्गते मत्पितः।
मद्विद्ये मदशेषदुःखशमकृत् मद्भावने मन्निधे
मन्मुक्ते मदुदारभाग्य मदसो मद्बुद्ध मां पालय ॥ ९० ॥

ब्रह्मा जिह्माननोऽभूद्गुरुरगुरुरहर्नायकोऽनायकोऽसौ
विष्णुस्तूष्णीं प्रपेदे कविरकविरभूदीश्वरोऽनीश्वरोऽपि।
शेषः शेषानुभावस्तव सुगत नुतौ खण्डिताखण्डलोक्तिः
कोऽहं मूढो वराकस्त्रिदशनरपते कीर्त्तने ते गुणानाम् ॥ ९१ ॥

---

मत्स्वामिन्निति। मत्स्वामिन् मम प्रभो। मदभीष्टकल्पविटपिन् ममाभिमतकल्पतरो। मद्देवते मम देवताभूत। मद्गुरो ममाचार्य्य। मन्मातः मम जनिके। मदुपास्य मया आश्रयणीय। मत्प्रियसखे मम प्रियसहाय। मत्सद्गते मम प्रतिष्ठाभूत। मत्पितः मम जनक। मद्विद्ये मम शास्त्रज्ञान। मदशेषदुःखशमकृत् मम सकलदुःखशमकारक। मद्भावने मम ध्यानालम्बन। मन्निधे मम निधान। मन्मुक्ते मम मोक्ष। मदुदारभाग्य मम वृहच्छुभाशुभसूचक। मदसो मम जीवित। मद्बुद्ध हे मम सर्व्वज्ञ। मां पालय रक्ष इत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ९० ॥

ब्रह्मेति। सुगत हे सर्व्वज्ञ ते भवतः। नुतौ स्तवे। गुणकर्म्मादिभिः प्रशंसने इति भावः। ब्रह्मा स्वयम्भुः। जिह्मं कुटिलम् आननं मुखं यस्य तथोक्तः। ह्रिया अवनतमुख इत्यर्थः। अभूत् अभवत्। इदं तु शेषेष्वपि यथावदन्वयः। गुरुः वृहस्पतिः। अगुरुः दुर्व्वलः। बलहीन इत्यर्थः। असौ अहर्नायकः सूर्य्यः। अनायकः अप्रधानः। विष्णुः हरिः तूष्णीं मौनम्। प्रपेदे प्राप्तवान्। कविः शुक्रः अकविः कविभावरहितः। अपण्डित इतिभावः। अभूत्। ईश्वरोऽपि शम्भुश्च अनीश्वरः ईश्वरभावरहितः। असमर्थ इत्यर्थः। शेषः सर्पपतिः शेषानुभावः जनमहिमः। आखण्डलः इन्द्रः तस्य उक्तिर्व्वचनम्। खण्डिता भेदिता। त्रिदशाः देवाः नराः मनुष्याः तेषां पतिः नायक. अनेन सम्बुद्धमालपति। हे सर्व्वज्ञ। ते भवतः। गुणानां कीर्त्तने मैत्र्यादिगुणसमूहानां कथने। मूढः अज्ञानः। वराकः मन्दभाग्यः। अहं कः कीदृशः। भवा-

दशद्वाधिकविंशतिः स्फुरदशीत्यनुव्यञ्जनै
र्महापुरुषलक्षणं वपुषि यस्य देदीप्यते
कलामपि न षोड़शीं भजति तस्य पुण्यात्मन
श्चतुर्मुखमुखो गणो दिविषदां नृणां का कथा ॥९२॥

महेन्द्रनवचापवत् कनकपर्व्वते सर्व्वतः
सदा तव मनोहरं स्फुरति सुप्रभामण्डलम्।
दृशो भवति गोचरं तदिह यस्य तस्य त्वरा
त्तमस्ततिमनुत्तमां हरति दूरमन्तर्बहिः ॥९३॥

---

मीति शेषः। इमे सर्व्वे बलवन्तो देवा अपि भवतो यथाभूतगुणकथने असमर्था भवन्ति। एवं सति मनुष्योऽहं कथं तव गुणं वर्णयामीति गुणानामुत्कृष्टभावं दर्शयति। स्रग्धरा-वृत्तम् ॥ ९१ ॥

दशेति। यस्य सम्बुद्धस्य। वपुषि शरीरे। अशीत्यनुव्यञ्जनैः तुङ्गनखतादिभिः अशीतिक्षुद्रलक्षणैः स्फुरत् भ्राजत्। दशद्वाधिकविंशतिः महापुरुषलक्षणं सुप्रतिष्ठित-पादतादि द्वात्रिंशत् पुम्लक्षणम्। देदीप्यते विराजति। तस्य पुण्यात्मनः परिशुद्ध-चित्तस्य। चतुर्मुखः ब्रह्मा मुखं प्रधानो यस्य तादृशः। दिविषदां गणः देवसमूहः षोड़शीं कलां षोड़शधाकृतभागमपि। न भजति न सेवते। नृणां मनुष्याणाम्। का कथा किमुत ?। पृथ्वीवृत्तम्। तदुक्तं रत्नाकरे। जसौ जसयला वसुग्रहयतिश्च पृथ्वी-गुरुरिति ॥ ९२ ॥

महेन्द्रेति। तव मनोहरं रुचिरम्। सुप्रभामण्डलं शोभनव्योमप्रभासमूहः। कनकपर्व्वते सुमेरुपर्व्वते। सर्व्वतः सकलदिशासु। आहतमिति शेषः। महेन्द्रः इन्द्रः तस्य नवचापवत् नूतनधनुरिव। इन्द्रधनुरिवेत्यर्थः। सदा स्फुरति विराजते। तत् व्योमप्रभामण्डलम्। इह अस्मिन् जगति। यस्य जनस्य। दृशो गोचरं भवति नेत्र-विषयं स्यात्। तस्य जनस्य। अन्तः मनसि च। बहिश्च। अनुत्तमां घनाम्। तम-स्ततिम् अन्धकारसमूहम्। दूरं हरति दूरीकरोतीत्यर्थः। पृथ्वीवृत्तम्। तल्लक्षणं पूर्व्ववत् ॥ ९३ ॥

पं लोचनलोभनं श्रवणयोरानन्दसन्दोहदा
णी विश्वविमोचकृत्तव कृपा वेशोऽतिशान्तस्तव।
ाण्डित्यं प्रथितं जगत्सु भगवन् सर्व्वज्ञनाम्नैव ते
ाम्राज्यस्य च यौवने निरसनं वैराग्यसीमा स्फुटम्॥ ९४॥

ौर्य्यं त्वद्विषमेषु दर्पदलनादङ्गीकृतं दैवतै
द्वाणैः ससुरासुरः प्रविजितो लोकोऽयमीषत्करम्।
ौर्य्यं ते प्रकटीचकार नितरां निर्व्वाणसाक्षात्कृतिः
कं ब्रूमो बलवैभवं भगवतस्तत् ते जगद्दुर्व्वहम्॥ ९५॥

---

रूपमिति। हे भगवन् तव रूपं शरीरम्। लोचनलोभनं नयनयोः रसाञ्जनवत् प्रियजनकम्। वाणी मधुरा भारती। श्रवणयोः कर्णयो रानन्दसन्दोहदा प्रचुरसन्तोषदायका। तव कृपा करुणा विश्वानां उद्धृत्तिशादिसर्व्वजनानां विमोचकृत् संसाराद्विमोचनं करोति। तव वेशः चीवरधारणादिविलासोऽपि शान्तः उपशमयुक्तः। ते भवतः पाण्डित्यं पण्डितभावः। सर्व्वज्ञनाम्नैव जगत्सु त्रिषु लोकेषु। प्रथितं प्रसिद्धम्। यौवने तरुणावस्थायाम्। साम्राज्यस्य चक्रवर्त्तिराज्यस्य च। निरसनं परित्यागः। ते भवतः। वैराग्यसीमा विरागभावस्य अवधिः। स्फुटं व्यक्तम्। भवतीति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ ९४॥

शौर्य्यमिति। यत् यस्य मारस्य। बाणैः शरैः। ससुरासुरः देवासुरसहितः। अयं लोकः सत्वः। ईषत्करम् अल्पप्रयासेन। प्रविजितः। प्रकर्षेण जितः। विषमेषोः वशवर्त्तिमारस्य दर्पस्य अभिमानस्य दलनात् खण्डनात्। दैवतैः देवतासमूहैः। तत् भवतः। शौर्य्यं शूरभावः। अङ्गीकृतं स्वीकृतम्। निर्व्वाणस्य साक्षात्कृतिः प्रत्यक्षकरणम्। ते भवतः। वीर्य्यं दृढशक्तिम्। नितराम् अत्यर्थम्। प्रकटीचकार प्रकाशं कृतवान्। भगवतः (ऐश्वर्य्यं पुण्य यशः श्रीसंकल्पसिद्धि प्रयत्न इति) एभिः षड्गुणैर्युक्तस्य। ते भवतः। जगद्दुर्व्वहं लोकदुरन्धरम्। महत्या करुणया सत्वानां संसाराद्दुत्तरणमितिभावः। तत् बलवैभवं कायज्ञानबलसम्पत्तिम्। किं ब्रूमः अपि किं कथयामस्य वयमिति शेषः। शार्दूलविक्रीडितं वृत्तम्॥ ९५॥

यत्र च्छागतुरङ्गमारणविधि र्वेदेऽपि तं निन्दसि
प्रेम्णा प्राणभृतामतः सकरुणस्त्वत्तो महान्नापरः ।
एवं ते गुणसम्पदो न विषया बुद्धेरसूयात्मनां
ते मूढाः प्रलपन्ति हन्त सुगतो मद्वेदनिन्दीत्ययम् ॥ ९६ ॥

निर्म्मज्जत्सुरसुन्दरीकुचचलन्निर्म्मन्दमन्दाकिनी-
फेनक्षीरसमुद्रकैरवसखी सत्कीर्त्तिलक्ष्मीस्तव ।
यं नालिङ्गति मन्दभाग्यमधुना भूयान्न तेनापि मे
सङ्गः सङ्गदादिवैद्य भगवन्नेषापि मे प्रार्थना ॥ ९७ ॥

---

यत्रेति । यत्र वेदे यस्मिन् वेदाख्ये धर्म्मविशेषे । छागतुरङ्गमारणविधिः (स्वर्गाद्य-भीष्टसाधनार्थम्) अजतुरङ्गमाणां मारणं विहितम् । तं वेदमपि । निन्दसि परिभवं करोषि । त्वमिति शेषः । (कस्मात् ?) प्राणभृतां सत्वानाम् । प्रेम्णा स्नेहेन । अतः त्वत्तः भवतः । महान् सकरुणः महाकरुणायुक्तः । अपरः न नास्ति । ते भवतः । एवं गुणसम्पदः पूर्व्वोक्तमहाकरुणादिगुणसम्पत्तयः । असूयात्मनां दोषाविष्करणस्वभावानाम् । बुद्धेः ज्ञानस्य । विषयाः गोचराः । न भवन्तीति शेषः । ते मूढाः अज्ञानाः । अयं सुगतः मद्वेदनिन्दीति मम वेदस्य निन्दिता इति । प्रलपन्ति प्रलापं कुर्व्वन्ति । हन्त इति अनुकम्पायाम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ९६ ॥

निर्म्मज्जदिति । निर्म्मज्जतां जलक्रीड़ां कुर्व्वताम् । सुरसुन्दरीणां दिव्ययोषितां कुचैः पयोधरैः चलत् कम्पमानं निर्म्मन्दम् अमन्दं बहुलं वा । मन्दाकिन्याः आकाश-गङ्गायाः फेनं च क्षीरसमुद्रश्च कैरवं कुमुदश्च तेषां सखी सहाया । तव सत्कीर्त्तिलक्ष्मीः शोभनयशःश्रीः । अधुना सम्प्रति । अस्मिन् नवमे बुद्धोत्पादकाले इति भावः । यं मन्द-भाग्यम् अल्पपुण्यं पुरुषम् । न आलिङ्गति आलिङ्गनं न कुरुते । तेन पापेन सार्द्धम् । मे मम । सङ्गः एकत्र वासोऽपि । न भूयादिति शेषः । सङ्गदस्य तृष्णाव्याधेः आदिवैद्य पूर्व्वभिषग्वर हे भगवन् मे मम । एषापि प्रार्थना । भवतीति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ९७ ॥

ये त्वां गच्छन्ति बुद्धं शरणमिति न ते दुर्गतिं यान्ति सन्त
स्त्यक्त्वा कायान्मनुष्यान्निरतिशयसुखांस्ते लभन्तेऽथ दिव्यान्।
दुःस्वप्नो दुर्निमित्तं दुरहिदुरहिता दुर्ग्रहा दुष्टसत्वा
दुःखं दुर्व्याधयोऽपि क्वचिदिह कुशलान्नोपसर्पन्ति चैवम्॥
[९८॥

छत्रं *ब्रह्मावधत्ते मणिमयममलं चामरं चक्रपाणिः
स्तोतारो गद्यपद्यैर्हरगुरुफणिनः शाङ्खिकोऽभून्महेन्द्रः।
अन्ये दीपोदकुम्भध्वजकुसुमलसत्पाणयो भक्तिनम्रा
स्तस्युर्व्याख्याय धर्मं भुवमवरुहतः स्वर्गतस्ते मुनीन्द्र॥९९॥

---

येति। ये सत्वाः शरणं निर्व्वाणसुखाय प्रतिष्ठा इति मत्वा। बुद्धं सर्व्वविदम्। त्वां गच्छन्ति अनुयन्ति। ते सन्तः शरणगताः साधवः। दुर्गतिं नरकम्। न यान्ति न प्राप्नुवन्ति। ते उपासकाः। मनुष्यान् कायान्। त्यक्त्वा। निरतिशयानि परमोत्कृष्टानि सुखानि येषां तथोक्तान्। दिव्यान् कायान्। लभन्ते प्राप्नुवन्ति। अत्यनन्तरमितिशेषः। अथ अनन्तरार्थद्योतकः। इह जन्मनि। कुशलात् शरणागमनपुण्यात्। दुःस्वप्नः स्वप्ने अनिष्टदर्शनञ्च। दुर्निमित्तं अशुभकारणञ्च। दुरहयः दुष्टसर्पाश्च। दुरहिताः क्रूरशत्रवश्च। दुर्ग्रहाः पापराशिषु स्थिताः नभश्चराश्च। पापफलदायकाः ग्रहा इत्यर्थः। दुष्टसत्वाः व्याघ्रमकरादिदुष्टजन्तवश्च। दुःखं कायिकचैतसिकादि दुर्व्याधयोऽपि दुष्टरोगाश्च। एते दुःस्वप्नादयः। एवं शरणगतान् क्वचित् कर्हिचित्। न उपसर्पन्ति न प्राप्नुवन्तीत्यर्थः। स्रग्धरावृत्तम्॥ ९८॥

छत्रमिति। हे मुनीन्द्र स्वर्गतः इन्द्रपुरात्। धर्मं धर्म्मसङ्गहण्यादिकं सप्तप्रकरणम्। व्याख्याय। दिष्ट्वा। मातृप्रमुखानां देवानामिति भावः। भुवं भूलोकम्। सङ्काश्यनगरद्वारमिति भावः। अवरुहतः अवतरतः। ते भवतः। ब्रह्मा सहाम्पतिर्ब्रह्मा मणिमयं मौक्तिकरत्नमयम्। छत्रं धवलातपत्रञ्च। चक्रपाणिः विष्णुः। अमलं निर्म्मलम्। चामरं शुभ्रवर्णं चमरपुच्छकृतव्यजनञ्च। अवधत्ते दधातिस्म। हरः शम्भुः गुरुः वृहस्पतिः फणी शेषाहिः एते गद्यपद्यैः गद्यपद्यरचनाविशेषैः। स्तोतारः स्तवं कुर्व्वन्तः। अभवन्। महेन्द्रः शचीपतिः। शाङ्खिकः शङ्खधमकः अभूत्। अन्ये शेष-

---

* "ब्रह्मा व्याधत्ते" क्वचित् पाठः॥

मातेवासीत् परस्त्री भवति परधने न स्पृहा यस्य पुंसो
मिथ्यावादी न यः स्यान्न पिबति मदिरां प्राणिनो यो न
[हन्यात् ।
मर्य्यादाभङ्गभीरुः सकरुणहृदय स्त्यक्तसर्व्वाभिमानो
धर्मात्मा ते स एव प्रभवति भगवन् पादपूजां विधातुम् ॥
[१०० ॥

सर्व्वप्राणातिपातात् परधनहरणात् सङ्गमादङ्गनाया
मिथ्यावादाच्च मद्याद्भवति जगति योऽकालभुक्तेर्निवृत्तः ।
सङ्गीतस्रक्सुगन्धाभरणविलसितादुच्चशय्यासनाद-
प्यासीद्धीमान् स एव त्रिदशनरगुरो त्वत्स्तुतौ नात्र शङ्का ॥
[१०१ ॥

---

देवाः । दीपाः माणिक्यमयप्रदीपाः उदकुम्भाः स्वर्णमयाः जलपूर्णघटाः ध्वजाः मणिकनक-मया ध्वजाः कुसुमानि पारिजातमन्दारादिपुष्पाणि । तैः लसन्तः पाणयः हस्ताः येषां तथोक्ताः । भक्तिनम्राः आदरेण अवनताः । तस्थुः स्थानं चक्रुः । एतद्धि मत्कृते सद्धर्म्ममकरन्दे विस्तरतो द्रष्टव्यम् । स्रग्धरावृत्तम् ॥ ९९ ॥

मातेति । यस्य पुंसः । परस्त्री परभार्य्या । मातेव जनिकावत् आसीत् । परधने परायत्तद्रव्ये । स्पृहा अभिलाषः न भवति । यः जनः मिथ्यावादी मृषाभाषणशीलः न स्यात् । मदिरां न पिबति सुरापानं न करोति । यः प्राणिनः न हन्यात् प्राणिवधं न कुर्य्यात् । मर्य्यादा सदाचारः तस्याः भङ्गः खण्डनं तस्मिन् भीरुः भयशीलः यः स तथोक्तः । सकरुणहृदयः दयान्वितचित्तः । त्यक्ताः परित्यक्ताः सर्व्वे अभिमानाः मिथ्या-गर्व्वाः येन तादृशः । धर्म्मात्मा साधुस्वभावः । स एव उपासकः । हे भगवन् ते भवतः । पादपूजां विधातुं श्रीपादपूजां कर्त्तुम् । प्रभवति समर्थो भवति । इतरे असमर्था एवेति सूचयति । अनेन उपासकगुणं वर्णितवान् । स्रग्धरावृत्तम् ॥ १०० ॥

सर्व्वेति । यः नरः सर्व्वप्राणातिपातात् सकलप्राणवधात् । परधनहरणात् परद्रव्याप-हरणात् । चौर्य्यादितिभावः । अङ्गनायाः स्त्रियः । सङ्गमात् सङ्गत्याः । स्त्रीपुंसयोः संभोगादित्यर्थः । मिथ्यावादात् मिथ्याभाषणात् । मद्यात् सुरापानात् । अकाल-

**तापत्त्याादिमार्गाः सदवयवयुताः घ्नन्ति रागादिदोषान्**
**शास्ते छिन्नमूला हतभवगतस्तयत्फलै र्यान्ति शान्तिम्।**
**र्गाणां क्लेशहानिः सदमृतमजरं कारणं स्यान्नवानां**
**र्माणां हेतुरेषां तव जिन वचनं तस्य हेतुस्त्वमेव॥१०२॥**

---

क्तेर्व्विकालभोजनात्। सङ्गीताः नृत्यगीतवाद्यादयः। स्रक्सुगन्धः मालागन्ध-लेपनम् आभरणम् अलङ्कारः विलसितं विभूषितं तस्मात्। उच्चात् तुङ्गात् य्यासनात् शयनासनात्। निवृत्तः आसीत् विरतः अभूत्। त्रिदशाः देवाः नराः नुष्याः तेषां गुरुः आचार्य्यः। अनेन सम्बुद्धम् आलपति। हे सम्बुद्ध सएव मान् अष्टाङ्गशीलधारी प्राज्ञः। त्वत्सुतः सुष्टुशिक्षाकरणाद्भवतः पुत्रः। अत्र यने। न शङ्का संशयो नास्तीत्यर्थः। अनेन उपासकस्य अधिकशीलं सूचयति। पासकोहि इदमष्टाङ्गमुपोषितशीलं रचन् अधिकशीले प्रतिष्ठितो भवत्येव। स्रग्धरा-त्तम्॥१०१॥

श्रोतापत्तिरिति। सदवयवयुताः शोभनाङ्गयुक्ताः (सम्यक्दृष्टिः सम्यक् संकल्पना सम्यक् र्म्मान्तः सम्यगाजीवः सम्यग्व्यायामः सम्यग्वचनं सम्यक् स्मृतिः सम्यक् समाधिरिति एभिः ष्टभिः आर्य्याङ्गैः समन्वागता इति भावः) श्रोतापत्त्यादिमार्गाः श्रोतापत्तिमार्ग आदिना सकृदागामिमार्गः अनागामिमार्गः अर्हन्मार्ग इति) इमे चत्वारो मार्गाः। रागादि षान् रागद्वेषमोहान्। सकलान् क्लेशानिति भावः। घ्नन्ति नाशयन्ति। छिन्नाः तेन न मार्गेण अविद्यादयः मूलाः पापहेतवः यैः तथोक्ताः। हतः नष्टः भवगतिः संसार-मनं यैः तादृशाः। ते रागादि दोषाः। तत्फलैः (श्रोतापत्तिफलं सकृदागामिफलम् अनागामिफलम् अर्हत्फलमिति) तैः तैः फलैः। शान्तिं उपशमनम्। आयान्ति प्राप्नु-न्ति। मार्गाणां तेषां श्रोतापत्त्यादिचतुर्व्विधमार्गसम्बन्धिनाम्। क्लेशहानिः रागा-दीनां व्युपशमः। सत् परमार्थसत्यम्। अजरं जरया विरहितम् अक्षयमित्यर्थः। अमृतं मरणादपगतं नित्यसुखस्वरूपम् निर्व्वाणमिति यावत्। कारणं स्यात् हेतुर्भवेत्। एषां नवानां धर्म्माणाम् (श्रोतापत्त्यादयश्चत्वारो मार्गाः श्रोतापत्त्यादयश्चत्वारि फलानि निर्व्वाणमिति) एषां नवलोकोत्तरधर्म्माणाम्। तव वचनं भवतस्त्रिपिटकधर्म्मः। हेतुः कारणम्। स्यादिति अन्वयः। तस्य त्रिपिटकधर्म्मस्य। हे जिन त्वमेव भवानव। हेतुः उपदेशकत्वात् कारणं कर्त्ता वा भवति। अनेन अन्ये ब्रह्मादयो देवा उपदेशकाः न भवन्तीति सूचयति। स्रग्धरावृत्तम्॥१०२॥

विंशत्सत्कायदृष्टिक्षितिधरममलज्ञानवज्रेण भित्वा
रागद्वेषादिपापं तदुदितमखिलं कर्म्म चोन्मूलयन्तः ।
चत्वारो लब्धमार्गास्तदनु गुणफलास्तेऽपि चत्वार एवं
त्वत्त श्चाष्टार्य्यसङ्घः पृथगिति न पुनश्चिन्तयामो मुनीन्द्र ॥
[१०३ ॥

अपि गगनमनन्तं सर्व्वसत्वोऽप्यनन्तः
सकलमिदमनन्तं चक्रवालं विशालम् ।
वदसि जिन विदित्वानन्तया ज्ञानगत्या
तव च गुणमनन्तं वेत्सि बुद्ध त्वमेवम् ॥ १०४ ॥

---

विंशदिति । अमलेन निर्म्मलेन । मलरहितेनेत्यर्थः । ज्ञानवज्रेण मार्गज्ञान-वज्रायुधेन । विंशत्सत्कायदृष्टिः (रूपमात्मतः समनुपश्यति । रूपवन्तं वा आत्मानम् । आत्मनि वा रूपम् । रूपे वा आत्मानमित्यादिक्रमेण पञ्चसु स्कन्धेषु एकैकस्मिन् स्कन्धे चत्वारश्चत्वार इति) विंशतिप्रभेदगता स्वकीयशरीरे प्रवृत्ता विपरीतदृष्टिः । सा एव क्षितिधरः पर्व्वतः तम् । भित्वा समुच्छिद्य । रागद्वेषादि पापं रागः लोभः द्वेषः विरोधः आदिना मोहः माया मदः शाठ्यम् ईर्षामात्सर्य्याद्यकुशलञ्च । तत् तस्मात् रागादि क्लेशहेतोः उदितम् उद्भूतम् । जातमित्यर्थः । अखिलं प्राणवधादि सकलं कर्म्म च । उन्मूलयन्तः मूलतो नाशयन्तः । लब्धमार्गाः स्रोतापन्नादिप्राप्तमार्गाः । चत्वारः सङ्ख्या-नियमदर्शनम् । तदनुगुणैः तैर्म्मार्गैः प्राप्तस्रोतापन्नादिफलाः । ते अपि चत्वारः । एवं इत्थम् । पुनः भूयः । अष्टार्य्यसङ्घः अष्टार्य्यपुद्गलगणः । हे मुनीन्द्र त्वत्तः भवतः । पृथक् इति भिन्न इति । न चिन्तयामः चिन्तनं न कुर्म्मः । वयमिति शेषः । अष्टार्य्य सङ्घोऽपि भवतः सम्बन्धीति वयं चिन्तयाम इति भावः । स्रग्धरावृत्तम् ॥ १०३ ॥

अपीति । गगनमपि आकाशमपि । अनन्तम् अवधिशून्यम् । सर्व्वसत्वः सकल-जनोऽपि । अनन्तः परिच्छेदरहितः । अप्रमाण इत्यर्थः । सकलमिदं विशालं पृथुलं चक्रवालं लोकधातुरपि । अनन्तं पर्य्यवसानरहितम् । हे जिन अनन्तया प्रमाणाति-क्रान्तया । ज्ञानगत्या सर्व्वज्ञताज्ञानेन । विदित्वा ज्ञात्वा । विभूतं त्वलति भावः । वदसि विभज्य कथयसि । त्वमिति शेषः । हे बुद्ध एवम् इत्थम् । तव अनन्तं

भगवति भवभीतिध्वंसकारिण्यमोघे
भवतु भवतु भक्तिर्जन्मजन्मान्तरेऽपि।
भवतु भवतु धर्म्मः सर्व्वथा मेऽनुशास्ता
भवतु भवतु सङ्घोऽनुत्तरा पुण्यभूमिः॥ १०५॥

त्रिभुवनमहनीयं त्वामभिष्टुत्य बुद्धं
विशदतरमदभ्रं पुण्यमत्रार्ज्जितं यत्।
जगति सकलसत्वास्तेन सम्बुद्धबोधिं
विधुतविविधपापा भावनाभिर्व्रजन्तु॥ १०६॥

---

प्रमाणरहितम्। गुणं त्रिविद्या चतुर्वैशारद्यादि गुणञ्च। त्वम् एव वेत्सि जानासीत्यर्थः। मालिनीवृत्तम्॥ १०४॥

भगवतीति। अमोघे सार्थके। भवस्य संसारोत्पन्नायाः भीतिः भयं तस्याः ध्वंसकारी विनाशनशीलः तस्मिन्। भगवति सम्बुद्धे। भक्तिः आदरः। ममेति शेषः जन्मजन्मान्तरे उत्पन्नोत्पन्नेषु जातिषु। भवतु भवतु। धर्म्मः सपर्य्याप्तिकः नवलोकोत्तरधर्म्मः। मे मम। अनुशास्ता अनुशासकः। भवतु भवतु। सङ्घः अष्टार्य्यपुद्गलगणः। अनुत्तरा अत्यन्तश्रेष्ठा। पुण्यभूमिः पुण्यक्षेत्रम्। भवतु भवतु। ममेति अन्वयः। मालिनीवृत्तम्॥ १०५॥

त्रिभुवनेति। त्रिभुवनैः भुवनत्रयवासिभिः महनीयं पूज्यम्। बुद्धं त्रैकालवर्त्तिनां सर्व्वधर्म्माणां वेत्तारम्। त्वां भवन्तम्। अभिष्टुत्य स्तुत्वा। भक्त्यातिशयेन स्तोत्रं कृत्वेति भावः। अत्र स्तोत्रकरणे। विशदतरम् अतिशयनिर्म्मलम्। अदभ्रम् अनल्पम्। बहुलमिति यावत्। यत् पुण्यं कुशलम्। अर्ज्जितं सञ्चितम्। तेन कुशलेन। जगति लोके। सकलसत्वाः सर्व्वे प्राणिनः। विधुतानि त्यक्तानि विविधानि अनेकप्रकाराणि पापानि यैस्ते। भावनाभिः समयविदर्शनादिभिस्त्रिणवशीकरणक्रमैः। सम्बुद्धबोधिं सर्व्वज्ञताज्ञानम्। बुद्धत्वमिति भावः। व्रजन्तु प्राप्नुवन्त्वित्यर्थः मालिनीवृत्तम्॥ १०६॥

**भास्वद्भानुकुलाम्बुजन्ममिहिरे राजाधिराजेश्वरे**
**श्रीलङ्काधिपतौ पराक्रमभुजे नीत्या महीं शासति ।**
**सद्गौड़ः कविभारती क्षितिसुरः श्रीरामचन्द्रः सुधीः**
**श्रोतॄणामकरोत् स भक्तिशतकं धर्म्मार्थमोक्षप्रदम् ॥ १०७ ॥**

---

भास्वदिति । भास्वत् प्रकाशत् । विदितमित्यर्थः । मनु मान्धातृ भरत भगीरथादीनां नृपवराणामुत्पत्त्या अतिप्रसिद्धमिति भावः । भानुकुलं सूर्य्यवंशः तदेव अम्बुजन्म पद्मम् । तस्य प्रकाशने मिहिरः सूर्य्य इव तस्मिन् । श्रीलङ्काधिपतौ श्रीलङ्केश्वरे । राजाधिराजानः प्रधानराजानः । तेषां राजेश्वरे नायकराजनि । पराक्रमभुजे तन्नामकनृपवरे । नीत्या दशराजधर्म्मेन मनुनीत्यनतिक्रमेण वा । महीं भुवम् । शासति अनुशासनं कुर्व्वति । राज्यं कारयतीत्यर्थः । सद्गौड़ः उत्तमे गौड़देशे समुत्पन्नः । कवीनां भारती सरस्वतीव । सुधीः प्रशस्तबुद्धिमान् । श्रीरामचन्द्रः तन्नामकः । सः क्षितिसुरः ब्राह्मणः । श्रोतॄणां श्रावकजनानाम् । धर्म्मार्थमोक्षप्रदं त्रिवर्गसम्पत्तिप्रदायकम् । भक्तिशतकं तन्नामकग्रन्थरचनाम् । अकरोत् कृतवानित्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १०७ ॥

इति श्री शाक्यमुनेर्भगवतः सर्व्वज्ञस्य परमोपासकेन गौड़देशीयेन श्री बौद्धागमचक्रवर्त्तिना भूसुरेणाचार्य्येण महापण्डितेन विरचितं भक्तिशतकं समाप्तम् ॥

इति श्री शीलस्कन्धस्थविरेण कृता रत्नमाला नाम भक्तिशतकटीका समाप्ता ॥

---

लङ्कायां यतिवृन्दसन्निवसतौ प्रासादशृङ्गोज्ज्वले
आरामे वसतिप्रमोदजननेऽयं शैलबिम्बाभिधे।
शीलस्कन्धयतिश्चकार मधुरां व्याख्यामिमां धर्म्मवित्
स श्रीमान् जनवत्सलो परहितो यो नूतनग्रामजः ॥

यदत्र विद्यतेऽस्माकं प्रमादाद्भ्रमतोऽपि वा।
स्खलनं विबुधा ज्ञात्वा शोधयन्तु दयापराः ॥

वाणैकनागशशभृद्द्विमिते शकाब्दे
विंशेऽह्नि चण्डकिरणे वृषभं प्रयाते।
व्याख्यामिमामकृत साधुजनस्य तुष्ट्यै
सेयं समुल्लसतु सौगतभक्तिवृद्ध्यै ॥

शिवमस्तु ॥

—oOo—








Beng. Sect. Press—Reg. No. 9 Tn.—1,000—30-12-95.

